श्रीरस्तु

श्रीमते हयग्रीवाय नमः

# श्रीविरक्तिगुरुवरसप्तति:
# श्रीयतिपतिवैभवदीपिका च

---

कृतिद्वयमिदं
श्रीवङ्गीशकुलकलशजलधिकलानिधिना
छन्दोग श्रीनिवासाचार्येण
विरचितम्

तत्तनूजेन एस्. अनन्ताचार्येण
सटिप्पणं प्रकाशितम्

मद्रपुर्यां
बि. जि. पाल् अण्ड् को इत्येतैः
सम्मुद्रितम्
१९५४

पू: यम ] [ ०-८-०

श्रीरस्तु

श्रीमते हयग्रीवाय नमः

# श्रीविरक्तिगुरुवरसप्ततिः
# श्रीयतिपतिवैभवदीपिका च

कृतिद्वयमिदं

श्रीवङ्गीशकुलकलशजलधिकलानिधिना

छन्दोग श्रीनिवासाचार्येण

विरचितम्

तत्तनूजेन एम्. अनन्ताचार्येण

सटिप्पणं प्रकाशितम्

मद्रपुर्यां

बि. जि. पाल् अण्ड् को इत्येतैः

सम्मुद्रितम्

१९५४

मूल्यम् ]

# विषयानुक्रमणिका

श्रीमते रघूद्वहमहादेशिकाय नमः



श्री विरक्तिराघवार्य महागुरुः (1822—1902)

श्रीवत्सवंशकलशाम्बुधिपूर्णचन्द्रं
श्रीमत्सदार्यगुरुराट्करुणैकपात्रम् ।
श्रीरङ्गनाथचरणार्पितचित्तवृत्तिं
श्रीमद्रघूद्वहगुरुं शरणं प्रपद्ये ॥

श्रीमते श्रीनिवासमहादेशिकाय नमः



घट्टीपुरं छन्दोग श्रीनिवासाचार्यः (1877—1942)

श्रीमद्वात्स्यविरक्तिराघवगुरौ न्यस्तात्मरक्षाभरं
तस्मात् कौशिकदेशिकार्यगुरुतश्चाप्तागमान्तद्वयम् ।
धीवैराग्यमुखैर्गुणैः परिवृतं छन्दोगचूडामणिं
भारद्वाजकुलोद्भवं गुरुमणिं श्रीवाससूरिं भजे ॥

## FOREWORD

Sriman Kumaravadi Srinivasachariar Swami, a great savant in Sanskrit, was well-known for his knowledge of *Sahitya* and *Vedanta* to many of his contemporaries in Madras. Born of a noble family, he mastered Sama Veda before completing his twelfth year and went to Kethandapatti, a place then renowned for Sanskrit learning, and had the good fortune to come under the inspiring influence of Sri Virakti Raghavacharya Swami, respected for his self-renouncement or *Virakti.* After having attained proficiency in Kavya, Nataka and Alankara under the able guidance of Sri Kapisthalam Rangacharya Swami, a Sahitya Scholar, he went to Tirupati and studied *Ubhaya Vedantam* under Sri Mahamahopadyaya Kapisthalam Desikacharya Swami, the distinguished exponent of the Visishtadwaita School of Philosophy. Sri Kapisthalam Swami often used to express his appreciation of his student's keen and clear grasp of Tarka and Mimamsa. Thus, after completing his course, he came to Mylapore and settled there to disseminate Sanskrit learning with the blessings of the Guru. He dedicated his life to the cause so dear to him and among his students may be counted leading lawyers and eminent judges.

It was my very rare privilege to study Sri Bhashyam and Srimad Gita Bhashyam under him and I write this foreword with grateful joy. His scholarship is revealed in his two earlier publications, *viz.*, Krittika Dipotsava Anushtana Vichara and Chhandogopakarma Nirnaya and he was always regarded as an authority in Ahnika Sastras and Sama Veda. The other two works of the learned Pandit are—(*i*) VIRAKTI GURUVARA SAPTATI and (*ii*) YATIPATI VAIBHAVA DIPIKA—

which are published now. VIRAKTI GURUVARA SAPTATI is a brilliant devotional lyric of 70 slokas in Aryavritta addressed to his Acharya, Sri Virakti Raghavacharya Swami. The slokas portray the supreme qualities of the Acharya in sonorous language, enriched by spiritual thought and they bring out the author's *Acharya Bhakti* and his deep understanding of *Vedanta* and *Alankara* Sastras, and also the philosophy of *Prapatti* Sastra. The reader will not fail to appreciate the Pandit's *jeu-de-mots* in this composition.

The other work, YATIPATI VAIBHAVA DIPIKA, though incomplete, is a masterpiece in Sanskrit. It is understood that this was written by the author as early as 1904 while he was conducting a Sanskrit Institution for a year in his native village, Maiyur (near Chingleput), and that he did not bestow any attention to the work later on when he came to settle at Mylapore. I am sure the beauty and richness of thought in the composition will be appreciated well by all, especially the *Gadya* about Sriperumbudur, the birth-place of Sri Ramanuja. I am very happy to note that the author's sons have published this excellent work and the whole Sanskrit world is indebted to Sri Kumaravadi Swami for the service he has rendered to the cause of Sanskrit in general and Vedanta in particular.

**P. N. SRINIVASACHARI,**
Retired Principal
and
Professor of Philosophy,
Pachiappa's College.

*Sri Krishna Library,*
*Mylapore,*
*14th June 1954.*

श्रीः

## प्रशंसनम्

परं भाग्यं मन्ये यदहमिह किञ्चिन्निगदितुं
प्रवर्त्योऽस्म्येते हि प्रगुणमतयः प्राज्ञतिलकाः ।
मम श्रीवासार्याः परिचिततमाः प्रेक्ष्य कवितां
यदीयामानन्दी भृशमहमशेषार्थमधुराम् ॥

न्यायादिशास्त्रेषु नितान्तमाप्ताः
प्रावीण्यमेते खलु सर्वदाऽऽप्ताः ।
साहित्यमर्मज्ञतमास्तथेमे
तदेतदत्र स्फुटमीक्षणीयम् ॥

आचार्यभक्तिमनघां हरिभक्तितुल्याम्
आविष्करोति हि कृतिद्वयमेतदेषाम् ।
छन्दोगवंशतिलकाः श्रुतिमप्यधीत्य
संमोदयन्ति सरसाद्भुतसूक्तिगानैः ॥

छन्दोगश्रीनिवासार्यसूक्तिसारस्यवेदिना ।
वात्स्येन ज्ञाप्यते वीरराघवार्येण साम्प्रतम् ॥

उत्तमूर् . ति. वीरराघवाचार्यः,
रिटयर्ड् न्यायविद्वांसः,
संस्कृत विद्यालयः
(तिरुपति)

16—6—54

श्रीरस्तु

श्रीमते रघूद्वहमहादेशिकाय नमः

श्रीमते श्रीनिवासमहादेशिकाय नमः

# कवेः चरित्रसंग्रहः

शरण्यं भजतां पुंसां शाश्वतानन्ददायकम् ।
मायूरनगरावासं श्रीनिवासमहं भजे ॥ १ ॥

बादरायणसूत्राणां तत्त्वार्थप्रतिपत्तये ।
अवतीर्णमवन्यां श्रीभाष्यकारं यतिं भजे ॥ २ ॥

श्रीवेङ्कटेशघण्टांशं मायूरपुरवासिनम् ।
अर्चारूपेण राजन्तं निगमान्तगुरुं भजे ॥ ३ ॥

तत्त्वज्ञानेन दीपेन घ्नतीमज्ञानजं तमः ।
प्राचार्यसन्ततिं वन्दे मुक्तिनिश्रेणिकां मम ॥ ४ ॥

श्रीमत्सदार्यसच्छिष्यं श्रीवत्सकुलभूषणम् ।
विरक्तिराघवाचार्यं वन्दे मत्तातदेशिकम् ॥ ५ ॥

ग्रन्थस्यास्य प्रणेतारं सुधियामग्रयायिनम् ।
कुमारवाडिस्वामीति विश्रुतिं विपुलां गतम् ॥ ६ ॥

भारद्वाजकुलोद्भूतमपर्याप्तामृतात्मजम् ।
वन्देऽहं श्रीनिवासार्यं जन्मज्ञानप्रदं मम ॥ ७ ॥

संग्रहेणात्र वक्ष्यामि चरितं तस्य धीमतः ।
विद्याभिर्यैस्समस्ताभिः पतिरासीत्स्वयं वृतः ॥ ८ ॥

युतैर्नवनवत्या च शतैस्सप्तदशैर्मिते ।
ईश्वराब्दे शके भाद्रे कन्यालग्ने शुभे तिथौ ॥ ९ ॥
अष्टम्यां चोत्तराषाढानक्षत्रे भानुवासरे ।
छन्दोगश्रीनिवासार्यो भुवि श्रीमानवातरत् ॥ १० ॥
स्वमातुलकुलग्रामे कडलमङ्गलनामनि ।
समधीतस्सामवेदः बाल्य एव महात्मना ॥ ११ ॥
विधायाध्ययनं सम्यगेकादश्यां शरद्यसौ ।
लब्धुमिच्छन्सदाचार्यं प्रतस्थे वारुणीं दिशम् ॥ १२ ॥
तर्कव्याकृतिसाहित्यमीमांसाद्वयलक्षणे ।
शास्त्रौघे नैपुणं चित्रं दर्शयद्भिर्यशस्विभिः ॥ १३ ॥
परमैकान्तिभिस्सद्भिर्विद्वद्भिस्समलंकृतम् ।
केताण्डपट्टिमागत्य हृष्टोऽभूद्वीक्ष्य स स्थलम् ॥ १४ ॥
जातस्तदा महान्मोदः श्रीनिवासस्य मानसे ।
स्वाभीष्टफलसंसिद्धिं करस्थामिव पश्यतः ॥ १५ ॥
अतितेजस्विनं तत्र शान्तमाचारकोविदम् ।
विरक्तिराघवाचार्यं संश्रित्य प्राणमत्सुधीः ॥ १६ ॥
स निवेद्य स्वकार्पण्यं विरक्तिस्वामिने तदा ।
तदन्तेवासितां लेभे प्रापापि तदनुग्रहम् ॥ १७ ॥
कपिस्थलं श्रीरङ्गार्याच्छ्रीनिवासो महानथ ।
तर्कसाहित्यशास्त्रेषु वैदुष्यं समवाप च ॥ १८ ॥

श्रीरङ्गं च गते तस्मिन् राघवार्यमहागुरौ ।
श्रीनिवासो भरन्यासं कृतवानात्मनस्सुधीः ॥ १९ ॥

सामान्यशास्त्रमभ्यस्य श्रीरङ्गार्यगुरूत्तमात् ।
वेदान्तविद्यालाभाय स ययौ वेङ्कटाचलम् ॥ २० ॥

कपिस्थलं देशिकार्यात् सोऽत्र ग्रन्थचतुष्टये ।
विद्वदग्रेसरात्प्राप प्रावीण्यं परमाद्भुतम् ॥ २१ ॥

त्रयाणां गुरुवर्याणां कटाक्षैः प्रतिबोधितः ।
मयूरपुरमागत्य वासं चक्रे महामतिः ॥ २२ ॥

विरक्तिगुरुवर्यस्य सप्ततिं प्राणयत्सुधीः ।
रसालङ्कारभरितामाचार्यगुणमालिकाम् ॥ २३ ॥

आचार्यसप्ततिस्सैषा राजतेऽद्य वरा शुभा ।
प्रपत्तिशास्त्रविदुषां विस्मयानन्ददायिनी ॥ २४ ॥

श्रीमद्वैष्णवसिद्धान्तस्थापकस्य गुरोरसौ ।
ततश्चक्रे यतिपतेश्चम्पूं वैभवदीपिकाम् ॥ २५ ॥

एषा रसमयी प्रौढा चित्रालङ्कारभूषिता ।
सुवृत्ता ह्लादिनी चम्पूः कस्य वा न हरेन्मनः ॥ २६ ॥

आबालवृद्धं शास्त्रार्थं यथार्हं बोधयन्नसौ ।
न्यायाधीशादिकान् शिष्यान् लेभे पाण्डित्यवैभवात् ॥ २७ ॥

विज्ञानं सर्वविद्यासु नैपुण्यं बोधने तथा ।
निशाम्य विस्मितास्तस्य प्रशशंसुर्जना मुदा ॥ २८ ॥

पञ्चकालप्रक्रियोक्तनित्यकर्माण्यशेषतः ।
आचरन्द्विजवर्योऽसौ सर्वेषां पूज्यतामगात् ॥ २९ ॥

प्रमाणभूतश्शास्त्रेषु संशयानां निवारकः ।
कुमारवाडिस्वामीति ख्यापयामास तं जनः ॥ ३० ॥

इत्थं त्रिंशत्स वर्षाणि मायूरनगरे वसन् ।
स्वादयामास सर्वेषां तत्त्वज्ञानाह्वयं मधु ॥ ३१ ॥

चित्रभानौ ततः प्राप्ते कार्तिके मासि शार्ङ्गिणः ।
पदं प्राप त्रयोदश्यां श्रीनिवासः पिता मम ॥ ३२ ॥

ग्रन्थस्तेन प्रणीतोऽयं विदुषां हृदयङ्गमः ।
प्रतितिष्ठतु निर्बाधमाचन्द्रार्कं भुवस्स्थले ॥ ३३ ॥

सुतौ द्वौ श्रीनिवासस्य ग्रन्थस्यास्य प्रकाशकौ ।
कनिष्ठोऽहमनन्तार्यः ज्येष्ठस्तु वरदस्सुधीः ॥ ३४ ॥

This small book contains the two works—SRI VIRAKTI GURUVARA SAPTATI and SRI YATIPATI VAIBHAVA DIPIKA—written by my father, Sri Kumaravadi Srinivasachariar Swami of Mylapore, Madras. The Virakti Guruvara Saptati is a devotional lyric of 70 verses portraying the greatness of his Acharya, Sri Raghavacharya Swami (generally known as Virakti Swami) a Visishtadwaitic Savant hailing from the learned family of Tirumalai Nallan Chakravarty. The other work which is written in the style of a Champu, is devoted to the description of the glory of Sri Ramanuja or Yatipati, as he is known. As the works bring out the spiritual and philosophic

significance of Acharya Bhakti and are rich in poetic beauty, I have attempted to publish them.

A short biography of Sri Virakti Swami is found in the Book "NALLAN CHAKRAVARTI VAIBHAVA" written in Sanskrit by the eminent Scholar, Mahamahopadyaya Lakshmipuram Srinivasachariar Swami of Mysore. I have appended it at the end of the book. I have given above a life-sketch of my father composed in simple Sanskrit verses and also added a brief gloss on the Saptati, at the end.

I am very much indebted to Pandit V. Krishnaswami Iyengar, Professor of Hindi and Sanskrit, St. Joseph's College, Bangalore, who has helped me greatly in bringing out this publication. My thanks are also due in no small measure to the great Pandits—Sri U. Ve. V. Krishnamachariar Swami, Sri U. Ve. P. B. Annangarachariar Swami and Sri U. Ve. Uttamur Viraraghavachariar Swami—who were kind enough to go through the manuscripts and give valuable suggestions.

I wish to record my sincere gratitude to Sri V. S. Sundaram Iyengar and to the members of Sir S. Varadachariar's family for the financial assistance given by them towards the printing of the manuscripts. I am extremely thankful to Prof. P. N. Srinivasachariar for his learned Foreword and to my brother Sri S. Varadachariar for his guidance throughout.

I wish to express my thanks to Messrs. B. G. Paul & Co., Madras, and the Bharati Vijayam Press, Triplicane, for the quick and efficient printing of the book.

42, Chitrakulam North St.,
Mylapore, Madras-4,
*14th June, 1954.*

S. ANANTHACHARI.

श्रीरस्तु

श्री हयवदनपरब्रह्मणे नमः

श्रीमद्देवाधिराजाय परब्रह्मणे नमः

श्रीमते रघूद्वहमहादेशिकाय नमः

श्रीवङ्गीशकुलकलशजलधिकलानिधिना

छन्दोग श्रीनिवासाचार्येण विरचिता

# श्रीविरक्तिगुरुवरसप्तति:

हस्तिगिरिमस्तके भुवि
निस्तुलमेतद्विराजते वस्तु ।
यत्स्तुतिनिरस्तकलुषाः
विस्तृतकुशलं विशन्ति धाम बुधाः ॥ १ ॥

भक्त्या प्रमुषितमत्या
युक्त्या हीनो गुरोर्यते स्तुत्याम् ।
तत्या गिरां तथापि
प्रत्याकलने विरक्तिगुरुरीष्टे ॥ २ ॥

शुकवाणीसदृशीयं
कुकवेरपि मे सरस्वती परमम् ।
न करोति किं प्रमोदं
निकटोपगता विरक्तिसूरिगुरोः ॥ ३ ॥

कं किल हृदयोपायं
पङ्किलमनसां भवाम्बुधेस्तरणे ।
शङ्कित विरक्तिगुरुपद-
पङ्कजयुगळात्परं विलोकेथाः ॥ ४ ॥

नान्यां कलये हृदये
मान्यां लोके विरक्तिगुरुभक्तेः ।
कान्या गतिरिह गण्या
जन्यार्तिच्छेदभारवाहिन्याः ॥ ५ ॥

श्रीरङ्गकल्पवल्ली-
सारङ्गाक्षीसहायकारुण्ये ।
पारंगताय वारं
वारं गुरवे नमांसि भूयांसि ॥ ६ ॥

जय जय विरक्तिगुरुवर
भवभयमुष्टिंधयत्वकीर्तिगुरो ।
नय नय तव पदयुगळी-
मविनयसंभारसंभृतानस्मान् ॥ ७ ॥

सत्येन ते शपामि
प्रत्येमि त्वत्पदान्न किंचिदपि ।
पत्ये जगतां गुरुवर
कत्येव त्वां श्रिता न चरितार्थाः ॥ ८ ॥

पथ्या भजतां परमा
तथ्याभिख्या विरक्तिसूरिगुरोः ।
रथ्याविहृतिं तनुतां
मिथ्यालापानभिज्ञनिर्घुष्टा ॥ ९ ॥

वाम्यान्मार्गाद्गुरुवर
काम्याद्विरताः श्रिताः पथः सौम्यान् ।
भूम्यां कृतावतरणाः
याम्यां बाधां त्वया विधुन्वन्ति ॥ १० ॥

पक्षीन्द्रवाहपदयो-
रक्षीणध्यानहर्षपुष्टाङ्गम् ।
प्रक्षीणसर्वदोषं
लक्षीकुरुतां मनो विरक्तिगुरुम् ॥ ११ ॥

दग्धानां तापैर्वः
स्निग्धाः ! हृदयं विशेद्विरागिगुरुम् ।
मुग्धाननरोमाञ्चं
दुग्धाम्बुधिशायिपादनिध्यानैः ॥ १२ ॥

कामुककामविहारैः
कालं नयतः कयापि कलया मे ।
काममपि कटाक्षलहरीं
कलयतु करुणाकरो विरागिगुरुः ॥ १३ ॥

तं 'जय जय' निर्घोषैः
रञ्जय जिह्वे विरक्तिगुरुवर्यम् ।
भञ्जयतु संसृतिं नो
मञ्जुयतिप्रासहासवाक्तुष्टः १४ ॥

कालः कलिरावृणुते
बालस्तवने स्वयं विरक्तिगुरोः ।
मूलप्रभुं त्रिजगता-
मालप्स्ये कामुपाश्रयन्वृत्तिम् ॥ १५ ॥

सा चातुरी विजयतां
मोचामदहारिणी गुरोर्वाचाम् ।
वाचालता कुमतिनां
भूचारे यत्प्रसाजिता नेष्टे ॥ १६ ॥

पापपराकृतिकामे
पततु गुरौ मे परःशतं नमसाम् ।
पातुं पापिसमाजं
पादपयोजं परायणं यस्य ॥ १७ ॥

नन्दिनि परमानन्द-
स्यन्दिनि नृत्तं श्रयेर्गुरौ जिह्वे ।
बन्दिनि गुणैस्त्रिभिर्मयि
बन्दिनिभा त्वं गुरुं प्रसादयतात् ॥ १८

वाणी मम तु विशुध्यतु
बाणीभूता विरक्तिगुरुलक्ष्ये ।
क्षोणीधुरंधराणां
श्रेणिं क्षुद्रां तृणीकरोतु परम् ॥ १९ ॥

अरुणारविन्दलोचन-
करुणावरुणालयेन कापि दया ।
शरणागतभरणार्थं
धरणाववतारिता त्वमेव गुरो ॥ २० ॥

मरणावधि तव चरण-
स्मरणाज्जनयेर्गुरो त्वमानन्दम् ।
करणादिलयानन्तर-
मरुणाब्जाक्षं भजामि गोविन्दम् ॥ २१ ॥

नाहं सात्त्विकसंघं
साहंकारः समानतोऽस्मि गुरो ।
द्रोहं पुनरीहेऽस्मिन्
मोहं कुर्वंस्तथापि मयि दयसे ॥ २२ ॥

वेदो नैव ज्ञातः
भेदो नो शेषशेषिणोश्च मया ।
को दर्पे हेतुर्मे
पादप्राप्तेः परोऽत्र भगवंस्ते ॥ २३ ॥

कलकण्ठीवागुपमैः
कविकण्ठीरववचोभरैः स्तुत्यम् ।
कलकण्ठीयस्वनितं
गुरुकण्ठीरवममुं बत स्तौमि ॥ २४ ॥

जगदुर्निदानभूतं
जगदीश्वरसौहृदं तव प्राप्तौ ।
जगति त्वत्सौहार्दं
न गतिस्तत्प्राप्तये विहाय गुरो ॥ २५ ॥

भाव ! भवाब्धितितीर्षो
नावमुपेयाः गुरोः पदाभिख्याम् ।
यावद्देशविशेषे
जीवसि शेषेशयात्मकाद्रत्नात् ॥ २६ ॥

रङ्गाधिपपदकमले
भृङ्गाचरितं यदीयहृद्व्रजते ।
भङ्गातिदूरमध्वा-
सङ्गात्स जयतु विरक्तिगुरुवर्यः ॥ २७ ॥

वारान्निधिजलधारा-
दोरायोधनधुरंधरा जीयात् ।
नारायणनामावलि-
पारायणधोरणी गुरोर्वाणी ॥ २८ ॥

आम्नायमौलिदेशिक-
भूम्ना वैराग्यमुख्यगुणवितते: ।
धाम्ना विरक्तिगुरुवर-
नाम्नाऽलं नाथवानहं विजये ॥ २९ ॥

मन्दस्मितचन्द्रातप-
नन्दितवन्दारुजन्तुसंदोहम् ।
नन्दयतु वागमन्दं
तुन्दिलमस्मद्विरक्तिगुरुचन्द्रम् ॥ ३० ॥

न्यक्कृतदोषासंगो
धिक्कृतदिवसाधिपः कलातरलः ।
फक्कृतपापतमिस्रः
सत्कृतसत्कोऽपरस्तु गुरुचन्द्रः ॥ ३१ ॥

भाति कलंकी लोके
ज्योतिरुदस्तः सतां सदस्य इति ।
याति दया मयि ते कथ-
मेति सहि कला विधुर्विरक्तिगुरो ॥ ३२ ॥

युक्तं गुरौ प्रयुक्तं
शक्तं चन्द्रात्मकं पदं नेन्दौ ।
धिक्तं योयमयुक्तान्
नक्तं नाह्लादयेद्रवां गुम्भैः ॥ ३३ ॥

उत्पथगो बत चन्द्रः
सत्पथमतिलङ्घते कलाः प्राप्य ।
हृत्पथरम्यचरित्र-
स्तत्पथमालम्ब्य वर्ण्यतेऽत्रगुरुः ॥ ३४ ॥

दोषज्ञत्वयशस्ते
घोषं भजते कथं तरां लोके ।
दोषनिधीनपि यन्नः
पोषयसि त्वं विरक्तिसूरिगुरो ॥ ३५ ॥

कस्याप्यहमायत्तो
न स्यां निखिलं विदंस्तृणप्रायम् ।
मास्यादित्थं तुष्टि-
स्तेस्याद्दशयितुमलं कृपैव गुरो ॥ ३६ ॥

घूर्णत्कुदृष्टिमतिभिः
पूर्णं निगमान्तदेशिकेन्द्रमतम् ।
जीर्णं जगति तदा स्या-
त्तूर्णं यदि नो गुरोरिहाभ्युदयः ॥ ३७ ॥

अद्वेषस्त्वयि येषां
विद्वेषः संसृतौ स्थिरस्तेषाम् ।
प्रद्वेषस्त्वयि येषां
सद्वेषश्चेद्गुरो भरस्तेषाम् ॥ ३८ ॥

कलयतु कामपि कामं
कलानिधिर्मयि कलां गुरुः करुणाम् ।
काले कमलाकमनः
कारुण्यमनाः कटाक्षयेदस्मान् ॥ ३९ ॥

वत्सकुलाम्बुनिधीन्दो
वत्सलता ते वरा विभाति गुरो ।
यत्सकलै र्दुरवापं
दित्ससि रङ्गेन्द्रपादसङ्गं मे ॥ ४० ॥

तर्तुं ततकलुषाब्धिं
धर्तुं धनहीननिर्भरानन्दम् ।
स्मर्तुं त्वामपि गुरुवर
कर्तुं च स्तुतिमलं त्वदीयदया ॥ ४१ ॥

श्रीसूक्तिजालमीडे
विरक्तिसूरेर्यतीन्द्रमतसारम् ।
निर्युक्तिकैः किमन्यैः
निरुक्तिरहितैः दुरुक्तिनिकुरुम्बैः ॥ ४२ ॥

तोदावहं रिपूणां
मोदावहमेत्य शृण्वतां तु गुरोः ।
वादाहवं कदाऽहं
नादापूरितदिगन्तरं शृणुयाम् ॥४३ ॥

सन्देहजटिलबुद्धीन्
मन्देतरमेधयाभियोजयितुम् ।
सन्देशहरं शौरेः
वन्देऽभ्युदितं विरक्तिगुरुवर्यम् ॥ ४४ ॥

पण्डितवरा गुरुं मे
मण्डितवन्तो रघूद्वहाभिधया ।
खण्डितवन्तं मादृश-
चण्डितकलुषौघरक्षसां विसरम् ॥ ४५ ॥

रक्षोगणेऽघजन्म-
न्यक्षोभाय स्थिते क्वचिन्नु मयि ।
तत्क्षोभायोदीतः
स क्षोणौ रघुवराह्वयोऽसि गुरो ॥ ४६ ॥

अलमिह चिन्तेन गुरो
बलवति रङ्गेन्द्रसंगमे भवतः ।
कुलधनमेष रघूणां
कुलप्रदीपस्त्वमप्यभूस्तेषाम् ॥ ४७ ॥

बोधायनस्य फणितिः
बाधापेताधुनैव जयतितराम् ।
गाथाशतीभिरनितर-
साधारणतां गता विरक्तिगुरोः ॥ ४८ ॥

जिह्वा प्रवर्ततां मे
प्रह्वा वैराग्यराघवार्यगुरौ ।
आह्वापयेन्मुरारे-
र्बाह्वालिङ्गनविधौ स मामन्ते ॥ ४९ ॥

दारुण्यं दुरितौघे
कारुण्यं कलिहतेषु विनतेषु ।
आनृण्यं त्रिष्वृणिषु
प्रावण्यं दिव्यदंपत्योः ॥ ५० ॥

बाधिर्यं परिवादे
वैधुर्यं नर्मवादकेलीषु ।
दौर्वार्यं दुर्वादिषु
सौन्दर्यं चाखिलाङ्गपाळीषु ॥ ५१ ॥

चातुर्यं धिषणायां
माधुर्यं वाचि मनसि गाम्भीर्यम् ।
कातर्यं चाधर्मे
सोदर्यं सद्गुरौ जयत्यखिलम् ॥ ५२ ॥

संसारेऽभिसरन्तं
तं सारं मनुमिहोपदिश्य गुरो ।
कं सारविदग्रसरं
कंसारौ नातनोषि भक्तिगुरुम् ॥ ५३ ॥

यं द्रावयितुं सूर्य
स्तन्द्रालुरभून्ममान्तरध्वान्तम् ।
किं द्रावयन्तु तं भुवि-
चन्द्रादय इह विना विरक्तिगुरुम् ॥ ५४ ॥

यातान् क्षुधाधिबाधां
वीतासङ्गान्निवृत्त्युपाये स्याः ।
त्राता नस्त्वं गुरुवर
दाता तत्त्वार्थकैतवैः स्तन्यैः ॥ ५५ ॥

निद्रासङ्गमनादिं
भद्राशंसी मम क्षिप क्षिप्रम् ।
छिद्रान्वेषि हि तिष्ठति
तद्द्रागरिषट्कुलं विरक्तिगुरो ॥ ५६ ॥

कृष्णेति गुरोर्वाणी
विष्णोर्नामादरेण कल्याणी ।
पुष्णातु शुभं सततं
मुष्णन्ती दुरितसंततिं नमताम् ॥ ५७

मन्यामहे वयं गुरु-
मन्यादृशमम्बुवाहमुल्लसितम् ।
धन्यानातनुते योऽ
नन्यात्रसमक्षयं समभिवर्षन् ॥ ५८ ॥

भृंगीपङ्क्तिमनोहर-
संगीतनिनादनादिताम्बुरुहोः ।
भङ्गीं गुरुवरचरणा-
वङ्गीकुरुतो विनम्रजयनादैः ॥ ५९ ॥

आचार ! क चरिष्य-
स्याचार्येऽनीप्सितावनीचारे ।
का चातुरी परेषां
वाचापि त्वां कलौ समादर्तुम् ॥ ६० ॥

फणिपतिरपि स प्राप्तः
फणितिकुशलतां विरक्तिसूरिगुरो ।
फणितुं भवद्गुणौघं
व्रणितमति र्ध्रुवमवाप पातालम् ॥ ६१ ॥

त्राता यदि मां निर्गति-
मेतासि यशो दिगन्तविश्रान्तम् ।
नैतादृशो गुरुर्यदि
मातावत्तावता न मे हानिः ॥ ६२ ॥

विस्तारितविषयाब्धौ
निस्तारवतां निदानभूतान्नः ।
कस्तारकः कलौ गुरु-
हस्ताम्बुरुहोऽत्र तत्त्वमुद्राढ्यात् ॥ ६३ ॥

कुत्सितगतिरपि लोके
वत्सकुलाम्बुधिविधुं विरक्तिगुरुम् ।
उत्सुकमतिः श्रयेद्यदि
दित्सति मुररिपुपदं परेषाञ्च ॥ ६४ ॥

संवाह्य चरणाविति
संवादो मयि कदोदयेन्नु गुरोः ।
संवाहादथ गुरुपद-
संवाहस्स्यात्कदा च मम शिरसः ॥ ६५ ॥

वान्ते कमलाकान्ते
दान्तेन गुरो त्वयाऽत्र वसुधान्ते ।
तान्तश्चिरं कृतान्तः
क्रान्तः क्रियया‍धुनैव विश्रान्तः ॥ ६६ ॥

सरलीकरोतु वाणीं
मुरलीस्वनवद्गुरुर्मदुद्भूताम् ।
अनलीकभक्तिजनितां
विरलीकुर्वन्विशेषकलुषं मे ॥ ६७ ॥

संन्यस्तसर्वसङ्गं
विन्यस्तभरं विरक्तिगुरुवर्यम् ।
धन्यस्य मे श्रिता वा-
गन्यन्नापेक्षते समास्वाद्यम् ॥ ६८ ॥

हृद्यां विरक्तिगुरुवर-
विद्यां विष्णौ विशेषकौतुकीनीम् ।
हृद्याकलयामि सदाऽ
विद्याविस्तारमोषवेषजुषम् ॥ ६९ ॥

जयतु श्रीरङ्गपुरी
जयतु च तदलंकृती रमारमणः ।
जयतु च तद्भक्तगुरु-
र्जयतु च तच्छक्तिमद्विरक्तिपदम् ॥ ७० ॥

दूषयतु वाचमेनां
दोषग्राही जनोऽत्र मात्सर्यात् ।
भूषयितारो बह्वो
दोषविदग्रेसरा बुधा भूमौ ॥ ७१ ॥

वङ्गीश्वरकुलजनुषा
विरक्तिरघुवरगुरोः पदाब्जजुषा ।
श्रीवासाभिधविदुषा
व्यरचि नुतिरियं निरस्तनरकलुषा ॥ ७२ ॥

इति
श्रीवङ्गीशकुलकलशजलधिकलानिधिना
छन्दोगश्रीनिवासाचार्येण
विरचिता
श्रीविरक्तिगुरुवरसप्तति:
संपूर्णा
श्रीरस्तु.

श्रीः

श्रीमते रामानुजाय नमः

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमते रघूद्वहमहादेशिकाय नमः

वङ्गीपुरं-छन्दोग-श्रीनिवासाचार्य विरचिता

# श्रीयतिपतिवैभवदीपिका

## तत्रायं प्रथमो विलासः

कल्याणैरवलोकनैस्सकरुणैरानन्दयन् बन्धुरै
दुग्धाम्भोनिधिरोधसि प्रणमतां भद्राय निद्राति यः ।
कृत्स्नो भात्यवनौ यदीयविभवो निघ्नो यतीन्दोर्गिरां
स श्रीमान्मम सूक्तिगुम्भनचमत्काराय नारायणः ॥ १ ॥

कावेरीसरिदन्तरे विजयतां कादम्बिनी काऽपि नः
कामासारविवर्षणे सकुतुका काला कलेर्माथिनी ।
काले चञ्चलया कयापि लसिता कारुण्यमय्यात्र या
कामं तापमपाकरोति जगतां कर्पूरयन्ती दृशाम् ॥ २ ॥

पापानां प्रथमावतारसरणिं सा पातु मां रङ्गभू-
भूपालेन्द्रकुटुम्बिनी परगतेः सोपानपारम्परी ।
कोपावेशभरालसे स्वरमणे व्यापारयन्ती दृशौ
गोपायन्त्याधिकापराधभरितांस्तापानपाकुर्वती ॥ ३ ॥

घोरामर्षाधिकानां सुररिपुफणिनां प्राणहारी स्वनादैः
कालाकालाविवेकाज्जगति जयति यो वाञ्छितार्थाभिवर्षी ।
वैकुण्ठे सूर्यबिम्बे कलशजलनिधौ योगिनां मानसे च
प्राप्तो भूयो विहारान् स जयतु जलदः कोऽपि नारायणाद्रौ॥४॥

पुण्यानां विततिर्भुवो विनमतामिष्टार्थनिष्यन्दिनी
विष्णोर्वक्षसि रत्नहारलतिका सन्मुक्तिनिःश्रेणिका ।
विद्वत्संचयहृक्चकोरपरिषच्चन्द्रातपो न क्षरः
काचिन्मङ्गलदीपिका शुकपुरीमध्ये भुवि द्योतते ॥ ५ ॥

ददन्तां दन्तीन्द्राचलमणिदयादृष्टिविसराः
मुदं तामुद्वेलामविहतपदप्राप्तिजनिताम् ।
भजन्तां ते कीर्तिं सकलभुवने चारचतुरां
चिरं तां संसारोद्धरणघटितां नो नरकिणाम् ॥ ६ ॥

कल्याणी भुवि कापि कल्पलतिका कल्याणकोटिं गता
कल्याभीष्टफलप्रदा सुजगतामिष्टाय संकल्पताम् ।
यत्सान्निध्यवशेन सोऽपि वरदो देवाधिराजोऽभवत्
तत्रत्या निखिलाः श्रुताः सुमनसः स्वभोगमाभुञ्जते ॥ ७ ॥

जीयाद्यादवभूधरस्य शिखरे कोप्येष कल्पद्रुमो
येन क्ष्मातलवर्तिनामनुकलं वाञ्छावलिः पूर्यते ।
यस्त्वासिच्य विवर्धितो घनदयास्रोतोभिरेवात्मनः
कोपाटोपविजृम्भितामरधुनीदुर्मानमर्मच्छिदैः ॥ ८ ॥

सेवाहेवाकिनाकाधिपमकुटतटीप्रोतनिस्संख्यरत्न
प्रेङ्खन्निस्सीमनिर्यद्रुचिभरलहरीनित्यनीराजितांघ्रिः ।
लोलापाङ्गप्रणाल्या यदुशिखरिमणेर्मानसाकर्षधीरा
काचित् कारुण्यरूपा मनसि मम सदा देवता संनिधत्ताम् ॥९॥

वेलातिक्रमणोचितैरविनतैः कोलाहलोज्जृम्भितैः
हेलादाहितदानवेन्द्रनिकरैर्ज्वालाविभेदैर्जयी ।
लीलाम्भोजवदाहृतो मुरभिदा धीलाघवोत्थान्यसौ
बालानां दुरितानि नः क्षपयतात् कालावधौ चक्रराट् ॥१०॥

वर्षारम्भे कलितनिनदः कैटभारेः शराणां
शंखाख्यो नः समुपविशतान्मानसं राजहंसः ।
यत्रावेशेप्यधिकसुलभश्चक्रराजेन वासः
प्रायेणैवं सहजसुहृदां स्यात् कुतो विप्रयोगः ॥ ११ ॥

गाथामाध्वीमुपासे शठरिपुसुमनःप्रक्षरन्तीं क्षमायां
विद्वद्भृङ्गैर्विलोलैरहमहमिकया काममास्वादनीयाम् ।
यस्यास्त्वास्वादमेत्य प्रमुदितमनसो व्योम्नि नित्ये प्रविष्टाः
गायन्त्येतेऽहमन्नाद इति सुमधुरं साम गम्भीरनादाः ॥ १२ ॥

नाथो मे नाथयोगी कलयतु कुशलं कोऽपि कारुण्यराशिः
यं प्राहुः संयमीन्दोः समयसुरतरोरादिमं मूलमार्याः ।
ब्रह्मानन्दातिरेकादसकृदुपचितां नृत्यपारम्परीं तां
यद्योगाभ्यासकाले शठमथनमुनिर्दर्शयामास भूयः ॥ १३॥

वन्दे कारुण्यपूरप्रसवितृनयनं यामुनं तीर्थमीड्यं
यस्यान्तेवासितां तां त्वरिततरहृदः कौतुकात् प्रार्थयन्ते ।
यस्याः प्राप्तौ मुरारेः पदकमलयुगीसेवया धन्यधन्याः
नित्यानन्दे निमज्जन्त्यतिविमलधियः सूरिसंघेन सार्धम् ॥ १४ ॥

श्रीमान् रामानुजार्यो जगति विजयतामग्रयायी यतीनां
यन्नामोल्लापमात्रान्नरपतितनयां प्रात्यजद्ब्रह्मरक्षः ।
यस्याभाति त्रिदण्डी चिदचिदपि परं चेति तत्त्वत्रयस्य
स्थित्यादिस्थापनार्थं पृथगभिकलिता केतुदण्डत्रयीव ॥१५॥

यत्कीर्तिः स्वमतप्रवेशसुहृदामङ्गेषु पुण्ड्रायते
स्वान्ते सत्त्वगुणायतेऽथ भगवद्ध्यानाख्यगङ्गायते ।
सन्तोषादधिरोहतां हरिपदं तत्सूत्रयन्त्रायते
जीयादेष यतीश्वरो भुवि चिरं भूयाच्च नः सम्पदे ॥१६॥

वल्मीकप्रभवो मुनिः स्वयमिह प्रोक्तो बुधेन्द्रैः कविः
वल्मीकप्रभवेन्द्र एष यमिनां श्रेष्ठः श्रुतः पण्डितः ।
व्यासः सोऽपि पराशरेण जनितः श्रीकेशवार्यैर्गुरुः
शेषश्च स्वयमित्यबोधि धरणौ को वा यतीन्दोः समः ॥ १७ ॥

श्रीमद्रामानुजार्यैः स्वहृदयकपटे क्षेत्रसारे समुप्तान्
सारान् सिद्धान्तशालीन् श्रुतिमकुटगुरुः सूक्तिनीराभिषेकैः ।
संवर्ध्य स्फारयुक्तिव्रततिवृतिगणैर्दुष्प्रवेशान् परेषां
यो रक्षत्यार्द्रचित्तो निरवधिदयया तं विना कं भजामः ॥ १८ ॥

यो माता यः पिता यस्तनयदुहितरौ यश्चतुःषष्टिविद्याः
यो योगानां त्रयी यो निधिकुलमपि योऽध्यात्मविद्योद्भवा धीः।
य प्राप्यः प्रापको यो गुरुमणिरपि यो दैवतं यस्स एष
श्रीमद्वात्स्यो विरक्तो रघुवरगुरुराट् त्रायतां संततं नः ॥ १९ ॥

यद्वंश्यानां वयोन्ते सवनपरिचयोऽभूत् कवेरात्मजायाम्
येषां लोकावनार्थं भुवमवतरतां दैवतं रङ्गधामा ।
येषां श्रीचक्रवर्तीत्यनुपमबिरुदस्तत्कुलस्य प्रदीपाः
जेजीयन्तां जगत्यां रघुवरगुरवः काममाब्रह्मकल्पम् ॥ २० ॥

ब्रह्मानन्दः सुधीन्द्रैरनितरसुलभो लभ्यते चेत् प्रपत्त्या
सा चेत् संशोधनीया श्रुतिमकुटगुरोर्वाग्विशेषैर्गभीरैः ।
ते चेन्निःसीमसौख्या मम गुरुमणिभिर्देशिकार्यैर्दयार्द्रैः
तानुद्दिश्य प्रणामाः सकृदपि कलिताः कस्य नोत्तारकाः स्युः॥२१॥

गाढैर्यत्करुणारसैरुपचिता वाणीलता मे सुमै-
रेभिः सूक्तिमिषैर्यतीन्द्रमहिमस्तुत्या फलायेहते ।
श्रीमत्कौशिकवंशनन्दनवनीसन्तानशाखी मम
श्रीरङ्गार्यगुरूत्तमो विजयतामाचन्द्रतारं भुवि ॥ २२ ॥

यस्यातिथ्यं धरायां भरतबलजुषां वीक्ष्य वाचामभूमिं
द्रष्टुं श्रोतुं च वक्तुं प्रविकलकरणा व्योम्नि गीर्वाणवर्गाः ।
श्लाघन्ते स्मोरगाणामपि च सुमनसामीश्वरं स्वोत्तमाङ्गैः
सन्ध्यानाट्याभिघूर्णद्भवमकुटकुटुम्ब्यभ्रगङ्गासदृक्षैः ॥ २३ ॥

वंशे तस्य प्रथितयशसो लब्धजन्मा मुनीन्दोः
श्रीवासार्यो यतिवरगुरोर्वैभवं संतनोति ।
मानाभ्यर्हं महितविषयं मानयन्त्वार्द्रचित्ताः
विद्वत्संघाः विनयमधुरैः वाचिकैः प्रार्थनेयम् ॥ २४ ॥

क्व वाणी मन्दा नः क्व च यतिपतेर्दिव्यचरितं
स्तुतिं तस्याभीप्सन् न कथमिह जिह्रेमि नितराम् ।
यथामत्यालापो यतिपतिगुणानामसुमतां
परं श्रेयो दातुं प्रभुरिति महच्चापलमिदम् ॥ २५ ॥

जातो नायं प्रयासो यतिपतिविभवाभिष्टवे मे सुविद्या-
दुर्मानात् किन्तु तस्य प्रसदनविधये सादरं संयतिष्ये ।
आस्तां तस्य प्रसादोऽप्यकपटसुहृदां तत्पदैकाश्रयाणा
मीहे निर्मत्सराणामनवधिकरुणास्राविणीर्हार्ददृष्टीः ॥ २६ ॥

आस्तामत्र सहस्रशोऽन्यविषयो वाचां प्रपञ्चो मम
श्रीमान् संस्तव एष देशिकमणेर्गाढं रसं पुष्यति ।
अन्यस्मिन् समयेऽपि तिष्ठतुतरां स्तोमो घनानां क्षितौ
वर्षाम्भोधर एव लब्धकुतुकः स्फारं रसं वर्षति ॥ २७ ॥

प्राचां वाग्विसरे स्थितेऽपि बहुशो मोचारसस्यन्दिनां
वाचामभ्युदयो ममातिकुतुकी का चातुरीति स्तुतः ।
वाचालेऽप्यथवा कले क्षितितले पुंस्कोकिलानां कुले
नीचानामपि जायते बलिभुजामुद्वेलकोलाहलः ॥ २८ ॥

वाणी मे किमधिक्रियेत रसिकैरर्थ्या न वेति क्षितौ
यस्यां नूतनतागुणः स्थिरतया सूते सतामादरम् ।
येयं चित्रपटी यतीश्वरगुणैरासूत्रिता दर्शय-
त्येतस्याद्भुतसन्निवेशमधुराश्चित्राश्चरित्रावलीः ॥ २९ ॥

गावः पङ्कजबान्धवस्य भुवने विष्णोः पदालम्बना-
दुद्वेला जलजातसंततिममूरुल्लासयन्त्यावृताः ।
गावो मे परिपावनास्तु यमिनामिन्दोः पदालम्बनात्
कान्तस्वान्तसरोरुहाणि विदुषामुल्लासयन्त्यादृताः ॥ ३० ॥

---

**अस्ति स्वस्तिकरी भुवः सुमनसामानन्दसन्दायिनी**
**भूम्ना निर्जितदेवराजनगरी श्रीभूतपूराह्वया ।**
**या क्षोणीसुरसंचयैरधिगता सौम्यैः सुधर्माश्रयैः**
**निर्मर्यादमनश्वरं निवसतां नित्यं प्रसूते सुखम् ॥ ३१ ॥**

यस्याः प्रासादपालीखचितहरिमणिस्तोमनिर्यन्मयूखै-
रानीलामभ्रगङ्गामनुदिवसमसौ वीक्ष्य गीर्वाणवर्गः ।
कालिन्दी साभ्यसूया सुरसरिति पदं किं नु वा सन्निधत्ते
किं वा नस्सुन्दरीणां मलिनितसलिला कज्जलैरित्यवैति ॥३२॥

यत्सौधाञ्चल्लोललोहितमणिप्रादुर्भवत्कान्तिभि-
र्गाढालिप्तकुचस्थलीं स्वतरुणीमम्भोविहारेऽबले ! ।
वक्षोजे तव कुङ्कुमो घन इति व्यामोहयन् स्वर्युवा
तस्य क्षालनकैतवात् स्तनतटीः स्पृष्ट्वा मुहुर्मोदते ॥ ३३ ॥

प्रासादाग्रतटीकुटीरविहरत्सीमन्तिनीव्यायत-
व्यालोलत्कबरीमयूखविततिं देवालयासङ्गिनीम् ।
यस्यां तद्वदनारविन्दबहुलामोदावबद्धाशया-
मायान्तीं हरिनन्दनाद्भुवि जनो मेने मिलिन्दावलीम् ॥ ३४ ॥

हे मातर्वत्स! किं मे नयनयुगमिदं शीर्यते किंनिमित्तं
विद्युज्ज्योतिःकदम्बान्न हि तदिह पुरो गृह्यते लोचनाभ्याम् ।
हा हन्त! स्वर्णरत्नद्युतिभरलहरी केयमित्येष वादः
शच्यास्तत्सूनुनाऽभूत् सुरपतिनगरे वीक्ष्य यद्गोपुराग्रम् ॥३५॥

सर्वः संश्रयते गुणांस्तु भुवने सङ्गानुसारादिति
व्याहारो महतां पुराभवजुषां नैवाश्नुते व्यत्ययम् ।
यस्यामम्बरसङ्गमेत्य सततं मध्याः कुरङ्गीदृशां
चक्षुर्गोचरतां जहत्यतितरां यत्सूक्ष्मदृष्टेरपि ॥ ३६ ॥

जानीमो भुवि विप्रलम्भनपटून् यत्सुभ्रुवां मध्यमान्
नेत्राणां य इमे भवन्ति विषयाः केषाञ्चिदावेष्टिताः ।
केषाञ्चिन्न च गोचरा इति यतो यद्वा कृतं वाचकैः
यूनां मानसवञ्चनेन विदिताः सर्वत्र तत्तादृशः ॥ ३७ ॥

गद्यम्—

**या खलु पुराभवधराकृतसुकृतपरिणतिविततिरिति कृति-ततिनतिरतिवितरणशीला, निरन्तरपरिस्फुरत्पुंनाग, नाग, नारि-**

केल, पनस, किंशुक, किंपाक, कुरवक, मरुवक, रसाल, साल, हिन्ताल, ताल, तमालादिमानोकहनिवहकुञ्जप्रपञ्चमञ्जुलमञ्जरीपुञ्जकिञ्जल्करजोभरपरिमलितमन्दमारुतावधूतचन्द्रशालातल संतत सन्तन्यमानमदनकदनरतान्त नितान्तविश्रान्तकान्ताजन मण्डलगण्डस्थलीविलसितस्वेदबिन्दुसन्दोहा,याममात्रावशेषिण्यांनिशीथिन्याम् उदयगिरिशिखरपरिसरविसृमरदिनकरकरनिकरपरिदलितसरसिरुह वरविसरदुरभिमतिपरिहरण निपुणयतिवरगुरुचरणकमलयुगलमिलिन्दायमानवन्दारुवृन्दामन्दानन्दकन्दलितवन्दिकृत्यमुखरितहरिदन्ता, क्वचित् सप्ततन्त्रीनिनादनाडिंधमसप्तस्वरनिरन्तर, रथन्तर, रौरव, वामदेव्य, दैवोदास, यौधाजय, काव, कालेय, काक्षीवतश्रौतकक्ष, सैन्धुक्षितान्धीगव, समन्त, बार्हत, सौमित्र, मार्गीयव, वैरूप, पार्श्व, रोहितकूलीयामहीयव, श्रायन्तीय, शुद्धाशुद्धीय, वैश्वामित्र, वासिष्ठ, वारुण, माण्डव, बाभ्रव, भारद्वाज, हरिश्रीनिधन, सोम साम प्रमुख सामगान संश्रवण संस्तम्भितहरिणीकदम्बबन्धुरितस्वसविधप्रतोलीकतया किमेताः स्वपरिभाविनीः कुरङ्गीदृशः शरणमन्विच्छन्तीति शङ्कामङ्कुरयन्ती, परत्र घनाघनघनौघनिबिडकाण्डकदम्बाडम्बरपरिपठन कलाविलोलितवर्षासमयसमुदञ्चितनवाम्बुदाटोपपाटवा, वेदचूडानिकरचुम्बिपरमपुरुषपदावलम्बिमन्वादिस्मृतिगणप्रतिबिम्बीभूतनाथयामुन यतिवर निगममकुटदेशिक प्रमुख गुरुमणिपरिषदनुगृहीतसंस्तवसंचयसमुच्चरणसंकलितश्रोतृजनमनोरञ्जना, अपरत्र भृशतरकर्कशतर्ककलाशतयुक्तिविलासविजृम्भणवेलाहसनविशालाभ्यन्तरवेलातटकरतालाम्रेडितकोलाहलरवबालावलिपरिलोला घरपुटहेलागतपद्मालाश्रवणकुतूहलविद्वज्जालश्लाघाघूर्णितशीर्षविकीर्णप्रसवरजोभरबन्धुरगंधा, इतरत्र शब्दविद्यानिपुणविचक्षणगणविचार्यमाणब्रह्मशब्दनारायणपरतावष्टम्भकावयवरूढिशक्तियुक्तिविततिप्रवाहनिर्वापितदुर्वादिगर्वानलज्वाला, अन्यत्र सुन्दरपदबन्धबन्धुरितहृद्यपद्यावलीसंवलि-

तानवद्यगानविद्यापराजितसुराङ्गनानिचयवाराङ्गनावाटिकाशतीभि-रलङ्कृता, प्रादुर्भवन्त्यां प्रभातवेलायां नानाविधागमगुल्मलता-वितानबन्धुरपरिसरे केलीललितमरालीविचलितनालीकनिकरपाली विसृमरधूलीयुतजलकेलीसकुतुकसालीजनललनालीसुतनुमृणाली - विगलितानुलेपपङ्कपङ्किलपयः पूरतया आकारतोऽपि सरस्वतीनदी-मनुकुर्वाणे, क्वचित् पुण्डरीकप्रकाण्डताण्डवितसितपक्षाण्डजषण्ड-मयूखमण्डितकाण्डतया स्वस्मिन्नवगाहमानसुमनोजनमनोनैर्मल्य-सम्पादकसत्त्वगुणसम्पदमिव बिभ्राणे, अमरापगागर्वसर्वङ्कषे, क्वचित् जलक्रीडाकुतूहलसमायातकामिनीजनवदनारविन्दनिर्गल-विनिर्गलितकस्तूरिकातिलकपरम्परामलिनितसलिलतया सूरतन-यापूरानुदिनदोरादृवविधायिनि, निखिलजनमनोहारिणि रामानुज-सरसि कृतावगाहैः, अतिशुभ्रोर्ध्वपुंड्रपरिमण्डितविग्रहतया अन्तर्नि-वासशून्यतया बहिर्विसृत्वरसत्त्वगुणपरिदिग्धावयवसंनिवेशैरिव सन्दृश्यमानैः मूलमंत्र मन्त्ररत्न प्रमुखमहामन्त्रमन्त्रणवेलालोलायि-ताधरपुटतया अनादिकालानुसरणमुदितसंसृतिपिशाचिकासमुच्चाट नाय कोपवशादावर्तित जपावलिभिरिव विराजमानैः क्रमशोऽनुष्ठित-पाञ्चकालिकप्रक्रियैः, अनिदम्प्रथमवासनानुवर्तमानसंसारार्णवस-मुत्तरलसुखदुःखावर्तमोमुह्यमानजनानुजिघृक्षाबन्धुरेन्दिराकान्तस - मादेशकृतावतारैरिव नित्यसूरिभिः, गुरुकुलोपदिष्टमोक्षोपयुक्त निक्षेपविद्याभ्यसनाभिवृद्धाभिरामबलैः, रामबलैरिव विविधागम-कलितविहारैः, हारैरिव समाश्रितगुणगुम्भैः, गुम्भैरिव नानापदार्थ-शालिभिः, शालिभिरिव उत्तरायणसम्पादितसत्फलैः, सत्फलैरिव पुण्यकर्मपरिपाकैः, पाकैरिव पूर्वरूपपरावृत्त्यनुगुणतेजःसंयोगैः, संयोगैरिव योगिताप्रत्ययविधायकगुणैः, गुणैरिव सधर्मपरत्वाति शयैः, शयैरिव बहुशास्त्रविलासयोग्याधिकरणैः, रणैरिव राजकुल-प्रदर्शित निजवैभवैः, भवैरिव निजग्रन्थप्रशंसितलक्ष्मीकान्तचरितैः, कान्तचरितैरिव यशोविशालैः, प्राचेतसवचोभिरिवप्रसक्तप्रशंसित-

रामानुजवैभवैः, कुरुनन्दनैरिव कृष्णैककुतूहलैः, विजयसायकैरिव भवावमर्दनैः, सुधांशुपरभागैरिव निष्कलङ्कैः, बुधविग्रहैरिव सौम्यैः, जलाशयैरिव कीर्तिसंयुतैरतिगम्भीरैश्च, कलशार्णवपूरैरिव जलजन्तुबोधसाधकैर्लक्ष्मीप्रदानशौण्डैश्च, सुधांशुमयूखैरिव सन्मार्गप्रसारणैः कुवलयानन्दविधायकैश्च, अभिलषितविद्यानैपुण्यैरिव सार्वकालिकानन्तचिन्तनैः प्रतिष्ठितार्थसंचयैश्च, रत्नाकरतटप्रदेशैरिव शंखचक्रचिह्नितैः सत्वाश्रयैश्च, पुरस्कृतगुरुभिरपि तिरस्कृतगुरुभिः, समदर्शनैरप्यसमदर्शनैः, शौर्याधारैरप्यशौर्याधारैः, रामानुगचित्तैरप्यरामानुगचित्तैः, आजानसिद्धब्राह्मणभावैरप्यन्तरासिद्धब्राह्मणभावैः, वृषोदयाधायकयागैरपि विष्ण्वेकयाजकैः, आकिञ्चन्यशालिभिरपि धनदैः, शिवानुध्यानैरपि विष्ण्वेकध्यानैः, शङ्करैरपि लक्ष्मणमुनिसिद्धान्तबद्धादरैः, बुद्धाग्रयायिभिरपि बुद्धमतविरुद्धवचनैः, गुरुमतैकावलम्बिभिरपि गुरुमततिरस्कारचतुरैः अमन्दैः मनीषिकुञ्जरपुञ्जैरासेव्यमाना, नारायणवक्षःस्थलेनेव वैजयन्त्यलंकृतेन, वैकुण्ठेनेव मुक्ताञ्चितेन, अर्चिरादिकदम्बेनेव वातायनघटितेन, मथनकालिकमन्दरेणेव सुधाचर्चितेन, भक्तेनेव वन्दनमालालङ्कृतेन, चकोराक्षीकटाक्षेणेवोद्दीपनकेन, मारेणेव रतिपोषकेण, कुचकुम्भेनेव हृदयंगमेन निशान्तपटलेन, वलदमननगरीवाप्सरोभिरधिष्ठिता, मानससरसीव परमहंसाश्रिता, गगनस्थलीव हंसनिषेविता, प्रावृट्कालधुनीव बहूदकमण्डिता, सकलजनविलोचनानन्दकन्दभूता भूतधात्र्याम् । ॥ ३८ ॥

कान्तान्यनेकानि फलानि यस्यां
कांक्षानुगुण्येन सदा दिशन्तः ।
तिष्ठन्ति नम्राः सहकारवृक्षाः
स्थाने स लोके ददतां स्वभावः ॥ ३९ ॥

यदीयसौधाञ्चललोलनील-
मणिप्रभाजालमहाम्बुराशौ ।
निशीथिनीष्वत्र शशी जनाना-
मङ्कूरयत्यद्भुतशंखशङ्काम् ॥ ४० ॥

उच्चैः सान्द्रफलाकुलाः कदलिका या नारिकेलाश्च ये
द्वारालङ्करणश्रियं सुरपुरः पुष्यन्ति यत्पोषिताः ।
तांश्चैतान् विमतोपकारकुपिता संतर्जयन्तीव या
वाताधूतसमुन्नतध्वजपटीकोटिच्छलेनेर्ष्यया ॥ ४१ ॥

यदीयसौधाग्रविहारभाजां
कान्तामणीनां वदनेन्दुबिम्बान् ।
निश्चिन्वते निर्मलतागुणेन
कलङ्किनश्चन्द्रमसो विभिन्नान् ॥ ४२ ॥

घनप्रतापो हि जडस्वभावे
न दर्शयेत् सन्निहितोऽपि वेगम् ।
तस्मिन्यदिन्दूपलसौधवृन्द-
मतापयन्नाह्नि निदर्श्यतेऽर्कः ॥ ४३ ॥

वक्त्राणि वीक्ष्य सुदृशां यदुदग्रहर्म्य-
केलीकुटीरमणिकुट्टिमबिम्बितानि ।
यूनां कुलान्यनवधानवशाद्गवाक्ष-
रन्ध्रागतोऽयमिह चन्द्र इति भ्रमन्ति ॥ ४४ ॥

निर्वापितेऽपि रमणीमणिभिः प्रदीपे
चामीकरप्रतिमविग्रहभाभिरासाम् ।
निर्धूनिते तमसि सत्रपमीलिताक्ष-
मालिङ्ग्यते युवगणस्सुरतेषु यस्याम् ॥ ४५ ॥

वामभ्रुवां विधिरुरोजसरोजकोशान्
निर्माय यत्र सरसीष्वपि तादृशानि ।
निर्मातुमात्तकुतुकः शिथिलीकरोति
रोषाद्विकासनमिषाद्विफलप्रयासः ॥ ४६ ॥

तस्यामाविर्बभूव प्रथितगुणनिधिः केशवार्योऽध्वरीन्द्रः
श्रीमानासूरिवंशे दशरथ इव योऽमोदतेक्ष्वाकुवंशे ।
यज्ञैरज्ञातविघ्नैरसकृदुपचितैः किञ्च पुण्यैरगण्यैः
प्रापद्रामानुजाख्यं निरुपमतनयं शेषताशालिनं यः ॥४७॥

मधुरमङ्गलवासविलोलुपो
मधुरिपोरवतार इवापरः ।
अभवदस्य सुहृत् कमलेक्षणः
त्रिभुवनेषु विशालयशाः सुधीः ॥ ४८ ॥

परिणयविषयेऽसौ प्राप्तकौतूहलश्रीः
परिसरमुपसर्पन् पङ्कजाक्षस्य सूरेः ।
तदुपकलितमन्त्रस्तेन सार्धं स यज्वा
वृषगिरिमुपयातुं विद्वदग्र्यः प्रतस्थे ॥ ४९ ॥

प्रस्थितयोश्च तयोस्सरण्याम् ,

वाताः सुशीताः परितः प्रवाताः
लताः प्रभूता वितताः सुमौघैः ।
कलारवाऽऽसीत् कलहंसपंक्तिः
फलाकुला भूमिरुहोऽप्यकाण्डे ॥ ५० ॥

पन्थानं समतीत्य वेङ्कटगिरेः कान्तारमासेदुषोः
ज्योतिः प्रादुरभूदमेयमनयोरग्रे दृगासेचनम् ।
आश्रित्य द्विजरूपमेत्य निकटं सूरीन्द्रयोरादरात्
वाणीमाकल्याञ्चकार जगतां नैःश्रेयसीं कामपि ॥५१॥

"भो भो विद्वांसौ ! युवाम् अनुगृह्णाति खलु भगवान् भूतभावनो निरस्तसमाभ्यधिकसम्भावनो दयाघनः फणीन्द्रभूधरशिखरालङ्करणो रमारमणः। सन्निधौ किल मदीये जगदामोदविधायिन्यौ द्वे सन्तानमालिके युष्मदर्थमस्माभिः प्रतिष्ठापिते । तत्सन्निपत्य गृह्येताम्" इति व्याहृत्य तत्रैवान्तरधत्त ॥ ५२ ॥

ततश्च किमिदं ज्योतिः, तदनु किं वा ब्राह्मणरूपम्, कुतो वाऽस्मासु भगवत एव कृपालुता, के वा ते सन्तानमालिके, किमर्थं वाऽस्मासु तदर्पणमिति बहुशो विस्मयमानमानसौ सुधीन्द्रावञ्जनाद्रिं सत्वरमध्यरोहताम् ॥ ५३ ॥

यत्र हि महाम्बुराशेरिव यामुनतीर्थमुनेः सलिलसारानिव परमार्थसारानादाय, काकोदरपूगानिव दुर्मतकथकौघान् स्तनिताडम्बरैरिव

स्ववागाडम्बरैरभितो वित्रासयन्, भूमण्डल इव निखिले विद्वन्मण्डले नवोदकवर्षमिव परतत्त्ववर्षं विदधानः, कालमेघ इव भगवानशेष-शुभगुणपरिपूर्णः श्रीशैलपूर्णो गुरुमणिः, श्रीवेङ्कटरमणचरणनलिन-नित्यकैङ्कर्यधुरंधरः, किं वेमे कनकलतिके, किं वा विद्युल्लतिके, के वैते सुरसुन्दरीषु, अपूर्वेयं स्रष्टुः सृष्टिकौशलीति समस्तैरभितर्क्यमाणाभ्या-मनूढाभ्यामवरजाभ्यामनुगम्यमानः, सार्धमन्तेवासिबृन्दैः मन्दं मन्द-मिन्दिराकान्तमन्दिरान्तमवगाह्य भगवन्तमभिवन्दमानः प्रतिदिनम-ध्यास्ते ॥ ५४ ॥

प्राप्ते श्रीशैलमेतं सकमलनयने केशवार्याध्वरीन्द्रे
तत्तेजो वीक्ष्य लज्जावनत इव रविः प्राप पाश्चात्यशैलम् ।
सान्ध्यं कर्मावसाय्य प्रमुदितहृदयः श्रीशसेवाविलोलः
सूरिः श्रीशैलपूर्णं गुरुमथ भगवन्मन्दिरे संददर्श ॥ ५५ ॥

पश्यन्तौ कन्यकाभ्यां फलसुमविलसत्पाणिपङ्केरुहाभ्यां
संवीतं पार्श्वभागे गुरुमथ सुधियावापतां तौ विचिन्ताम् ।
तेजःपुञ्जः क एषोऽमृतरस इव नः शीतयत्यक्षियुग्मं
काऽऽस्य ज्वालावलीवानुपतति युगली कन्ययोरित्युदाराम्॥५६॥

प्रणम्य मुरमर्दनं प्रणमतां शतैरावृतं
गुरुं बहिरुपागतं तदनु विस्मयात् पश्यतोः ।
विशेषकृतताण्डवा विबुधयोर्मनोमण्टपे
विभातसमयावधिं विचकमे विवित्सानटी ॥ ५७ ॥

तदनन्तरं तावप्यग्रगण्यावग्रजन्मनाम् अभिवन्द्य भगवन्तं स्वीकृत्य च तत्कैङ्कर्यधुरंधरैः प्रदत्तं प्रसादादिकं, कृतार्थमात्मानं मन्यमानौ, उपविश्य च क्वचिदर्हणीयतमे देशे गुणवतां गरिष्ठस्य गुरुमणेः वैभवावगाहिनीभिरेव कथाभिर्निशां तां प्रशान्तामकुरुताम् ॥ ५८ ॥

प्रभातप्रायायां विभावर्याम्

आसूर्यध्वरिवर्ये
वितीर्णबोधे द्वितीय इव सूर्ये ।
बुबुधे स कमलनयन-
स्तटाक इव सुस्फुटत्कमलनयनः ॥ ५९ ॥

काल्येऽथोपास्य संध्यां सरसि भगवतो वर्णिनामग्रगण्यौ
तत्रत्यैः सूरिसंघैरसकृदभिहितान् देशिकोन्दोरुदन्तान् ।
श्रुत्वा चास्यानुजाते परिणयवयसौ कन्यके दृष्टपूर्वे
नत्वा श्रीशैलपूर्णं परिणयविधये प्रार्थयामासतुस्ते ॥ ६० ॥

श्रीमान् श्रीशैलपूर्णो गुरुरथ विनयैरात्मतेजोऽनुरूपैः
हृद्यैर्विद्याकलापैरपि परमनयोर्विस्मयानन्दसान्द्रः ।
आदौ कारुण्यदृष्टीरथ समनुगणां शंखचक्राङ्कलक्ष्मीं
पश्चात् कन्यायुगीं तां पृथगतिकुतुकाद्दत्तवानुत्तमाभ्याम् ॥६१॥

सेवावलम्बेन गुरोरभीष्टां-
स्तावापतामित्ययि किं विचित्रम् ।

के वा महापूर्णमुपेत्य लोके
नावाप्नुवन्ति स्वमनोरथार्थम् ॥ ६२ ॥

उदवहदथ कन्यां भूमिदेवीसमाख्यां
गुरुवरपरिदत्तां केशवः सोमयाजी ।
तदनु तदनुजां श्रीदेविकाख्यानयुक्तां
कमलनयननामा पण्डितश्चोदवाक्षीत् ॥ ६३

श्रीकेशवार्यः शुशुभे स भूम्या
श्रीकेशवः स्वप्रिययेव भूम्या ।
श्रिया स देव्या सरसीरुहाक्षः
श्रियेव देव्या सरसीरुहाक्षः ॥ ६४ ॥

क्षमावतामग्रिममध्वरीन्द्रं
क्षमेव मूर्ता ललनाऽश्रयन्ती ।
मनोभवस्येव रतिर्मनोऽस्य
विनोदयामास गुणैर्न कैः कैः ॥ ६५ ॥

पद्माक्षसूरेर्नयनप्रियाऽऽसीत्
देवी तु सा श्रीरिति साम्प्रतं तत् ।
श्रियो हि पद्मं प्रियमत्र लोके
यो यत्प्रियस्तस्य किल प्रियः सः ॥ ६६ ॥

पश्चादध्वनि जृम्भितस्य महसो दिव्याद्भुतं चेष्टितं
सर्वं संगिरताऽध्वरीन्द्रसुधिया सम्पूर्णचन्द्रायितम् ।

आश्चर्यादुपशृण्वतो मुहुरथ श्रीशैलनाम्नो गुरोः
संमोदैः सकलाङ्गगाढपुलकासङ्गैः समुद्रायितम् ॥ ६७ ॥

अथैवं विस्मयभराक्रान्तस्वान्तं मुहुर्मुहुः स्वस्मिन् प्रसीदन्तं भगवन्तं महापूर्णं तं यज्वनां वरिष्ठः कृताञ्जलिपुटः इत्थं व्यजिज्ञपत् ॥

भगवन्, किमत्राश्चर्यं यदस्मासु प्रसीदति भगवान् वेङ्कटगिरिनाथ इति । प्रथितं हि नः पूर्वेऽपि पितरः प्रयतमानाः परिणयकर्मण्यत्रैव सिध्यन्तीति । तदधुनाऽपि ससुहृदमिमं जनमनुगृह्णाति । यथा हि तत्रभवतामपि भवतामस्मिन् जने वाचामगोचरो विजयतेऽसौ प्रसाद इति ॥ ६९ ॥

आमन्त्र्य प्रणतिपुरस्सरं गुरुं तं
देवीभ्यां सममथ सान्द्रकौतुकाभ्याम् ।
आनम्य श्रितजनमोदनं मुरारिं
सूरीन्द्रौ निजनगरीमुपाश्रयेताम् ॥ ७० ॥

अथ गतेषु कतिपयेषु वासरेषु स्वां स्वां पुरीमधिष्ठाय वर्तमानयोः कन्यारत्नयोरहो खलु सर्वाङ्गमनोहरता ।

ययोः किल............ ॥ ७१ ॥

फणिप्रवरभूधरेश्वरवचस्सुधामाधुरीं
हृदा मुहुरुदाहृतां तदनु संततं चिन्तयन् ।
स केशवसमाह्वयः सुमनसां वरः स्वे पुरे
मुदं चिरमपूपुषत् प्रमदया धृतामोदया ॥ ७२ ॥

अथ भगवानरविन्दलोचनः क्षीरार्णवकन्यकया संमन्त्र्य स्ववल्लभया, समस्तवेदान्तसारनिर्यासभूतस्य भगवद्बादरायणसूत्रस्य यथावस्थितार्थविवरणाय निजतल्पराजं सर्पराजमाहूय, एवं नियोजयामास ॥७३॥

शङ्कातङ्कं विधून्वन् दुरभिमतिघनः शङ्करः शास्ति लोकान्
शर्वो दुर्वारमेधाः स्वयमिति मनुतेऽखर्वगर्वोक्तिजालैः ।
भीमो भूमावतीव प्रचरति सुचिरं नाम कौमारिलोऽसौ
चार्वाकश्चारुवाकस्तुदति च निखिलान् मन्यतेऽसारवाक्यान् ॥७४॥

कुमतिकथकजालं कुत्सितानन्दखेलं
कुशल कुरु विमानं कूपकूर्मोपमानम् ।
विचरतु शुभरूपा व्याससूत्रस्वरूपा
युवतिरहिपतेऽस्मद्वैभवे युक्तरूपा ॥ ७५ ॥

भाष्यं त्वाभाष्य रम्यं मयि निखिलजगद्धेतुतामातनिष्यन्
दूष्याः प्रोद्दूष्य वाचः कुमतिकरिघटाजिह्मतां संहरिष्यन् ।
आविर्भूया धरायामनघगुण ! भवान् कल्पतेऽनल्पमेधाः
शैवाक्रान्ताऽभितान्ता क्षितिरपि सततं दूयते त्रायतां ताम् ॥

भुवः स्थले भूतपुरीति काचित्
मनोज्ञरूपा मधुरेव भाति ।
आसूरिवंश्यः खलु केशवार्यः
तस्यां तपस्तप्यति पुत्रसिद्ध्यै ॥ ७७ ॥

अवतारमुशंस्तस्मिन्
भवतारणपण्डितः ।
भविता रञ्जकैर्वाक्यैः
भुवि तारयतु प्रजाः ॥ ७८ ॥

एवं रम्यगुणोपेतां
सौम्यसन्दर्भगुम्भिताम् ।
शेषिणो वाङ्मयीं मालां
शेषराजःसमग्रहीत् ॥ ७९ ॥

तदनु तुहिनरोचिर्मण्डलीवोष्णरश्मेः
घृणिभिरहिकुलेन्दोस्संप्रविष्टाभिरन्तः ।
अभवदतिसमर्था तामसव्याहतौ सा
यतिवरगुरुमाता यायजूकेन्द्रपत्नी ॥ ८० ॥

इति यतिपतिवैभवदीपिकायां
प्रथमो विलासः

श्रीमते हयग्रीवाय नमः

# अथ द्वितीयो विलासः

अथावतीर्णे फणिनां कुलेन्दौ
गुणार्णवे केशवधर्मपत्न्याम् ।
आनन्दनैरध्वरिनाथदृष्ट्यो-
राविर्बभूवेऽद्भुतगर्भचिह्नैः ॥ १ ॥

वपुर्लता सा विधुपाण्डराभा
विशेषरम्या विपुलायताक्ष्याः ।
गर्भावगाढोरगराजकान्त्या
गाढानुलिप्तेव तदा व्यलासीत् ॥ २ ॥

तस्याः पयोभिः परिपूर्यमाणौ
पयोध्रकुम्भौ किल पङ्कजाक्ष्याः ।
बुधेन्द्रमातृत्वपदेऽभिषेक्तुं
सन्नाहभाजाविव हेमकुम्भौ ॥ ३ ॥

पृथ्वी धरिष्यतितरां परिवृद्धिमस्याः
गर्भेण धर्मपरिपोषणकांक्षिणेति ।
संसूचनाय परिवृद्धिमवाप किल
पृथ्वी पयोधरयुगी नलिनायताक्ष्याः ॥ ४ ॥

आनीलचूचुकमुखः सरसीरुहाक्ष्याः
गर्भे स पीवरपयोधर आबभासे ।
नीलाम्बुजेन परिकर्मितशान्तिकुम्भो
न्यस्ते विधेरिव जगत्परितापशान्त्यै ॥ ५ ॥

फणाधरेन्द्रोरुदराश्रितस्य
ह्रियेव लीनैस्सुफणामणिभ्यः ।
विरेजुरङ्गानि विरोप्यमाणैः
कलापबृन्दैः कमलायताक्ष्याः ॥ ६ ॥

कुक्षिं गते कुण्डलिनाथवर्ये
तन्नाभिवल्मीकमगाधपूर्वम् ।
शनैः शनैर्गाधमभूत्तदानीं
कान्तामणेः केशवधर्मपत्न्याः ॥ ७ ॥

वक्षोरुहाचलतटीनिकटात् सुनाभि-
वल्मीकवक्त्रसुषिरेण हि विद्रुमोष्ठ्याः ।
गर्भे स्थितं फणिपतिं समुपैति द्रष्टु-
मुत्कण्ठितेत्यगणि रोमलताभुजङ्गी ॥ ८ ॥

मुखारविन्दे मुहुराद्दताभिः
मृद्भिः सुगन्धे मृदुलाखिलांग्याः ।
सनातनी हन्त सरस्वती सा
सदैव सामोदमुखी बभासे ॥ ९ ॥

संगच्छते स्वात्मनि सर्वथा न
स्वाधारतेति प्रवदन्तु, नैतत् ।
गर्भोदयेऽन्तः खलु भूमिदेव्यां
भूमिः प्रविष्टा कथमन्यथेयम् ॥ १० ॥

दिने दिने संववृधे सुदत्याः
नवा नवा वस्तुषु काऽपि तृष्णा ।
आपूरयत् सोऽपि समीप्सितार्थान्
आसूरिवंशोदधिपूर्णचन्द्रः ॥ ११ ॥

निदर्शयन्ती नयनाञ्चलाभ्यां
कार्याणि काले किल कारयन्ती ।
न वक्तुमीष्टे गुरुगर्भभारा
नितान्ततान्ताऽध्वरिनाथकान्ता ॥ १२ ॥

कृपाभरैर्हातुमपारयन्त्याः
देव्याः सखीभिः सकृदालपन्त्याः ।
मुखारविन्दं मुहुरम्बुजालैः
मुक्ताफलस्यूतमिव व्यभासीत् ॥ १३ ॥

वृत्ते प्रसिद्धा विरतिर्न वाक्ये
विद्वज्जनैः श्रावितपूर्वमेवम् ।
देव्यास्तु वृत्ते ददृशे न चैषा
वाक्ये व्यभाद्गर्भभरालसायाः ॥ १४ ॥

चिराय वैरं चिकुरान्धकारैः
सम्भूय निर्वर्तयितुं प्रवृत्ता ।
कान्तिर्मुखेन्दोरिव काऽपि रेजे
कपोलकान्तिः कमलेक्षणायाः ॥ १५ ॥

अनन्तसूरावभिजातनिद्रे
सुखाय नृणामुदरे सुदत्याः ।
संसर्गिणी तस्य समानभावा
सान्द्रालसा साऽपि सदा निदद्रौ ॥ १६ ॥

नारायणादेशमुपाददाने
नागाधिपे गर्भगते नताङ्ग्याः ।
नामावशेषान् स्वरिपून् विदित्वा
नाथादिसूक्तैःस्वयमुज्जिजीवे ॥ १७ ॥

संमोदतः संस्थुलगर्भचेष्टां
विहाय लज्जां विवरीतुकामा ।
विस्रम्भपात्रेष्वपि वाक्यशेषे
विशेषखिन्ना विरराम देवी ॥ १८ ॥

होमादिके कर्मणि होतृपत्नी
होतारमाराद्गुरुगर्भभारा ।
उपासितुं काममपारयन्ती
दूरे तदा प्राञ्जलिरेव तस्थौ ॥ १९ ॥

पुत्रप्रियः पुंसवनादिकाभिः
स तां प्रियां संस्कुरुते स्म यज्वा ।
प्रागेव यः पुंसवनादिकर्ते-
त्यमानि देव्यद्भुतगर्भचिह्नैः ॥ २० ॥

अपार्थक्लृप्त्या यदनादिसूक्त्याः
पदेषु जातं परवादिवृन्दैः ।
पदेषु संक्रान्तमिवाम्बुजाक्ष्याः
चाञ्चल्यमेतत् परिसंचरन्त्याः ॥ २१ ॥

वाक्यैः श्रुतीनामवशापतद्भिः
संभाषमाणा सततं सखीभिः ।
पदानि संछेत्तुमिव प्रवृत्ता
पदे पदे श्रान्तिमवाप देवी ॥ २२ ॥

पद्मापतिः प्रेरयिताप्यनन्तः
प्रेर्योऽपि गर्भोऽयमसावनन्तः ।
गर्भावलोके समभूदनन्त-
कुतूहलानां प्रमदोप्यनन्तः ॥ २३ ॥

द्वाराण्यतिक्रम्य बहिः प्रचारे
भाराद्यदाऽभूद्भृशमप्रगल्भा ।
अन्तर्गृहे सञ्चरिता तदासी-
दन्तःस्थकाकोदरवंशनाथा ॥ २४ ॥

अन्तर्गता दृष्टियुगी कृशांग्याः
अन्तर्गतं द्रष्टुमिवार्भकं तम् ।
तस्यास्सहायार्थमिवान्वगच्छत्
गण्डस्थली गाढकुतूहलेन ॥ २५ ॥

अथ प्रादुर्भावोन्मुख इव यतिक्ष्माधरपतिः
वसन्तोऽभूत् प्रादुर्भवितुमवनौ प्राप्तकुतुकः ।
यजन्निष्टापूर्तप्रभृतिभिरनेकैर्मुररिपुं
सदा संमानार्हो भवति पटलैर्यः सुमनसाम् ॥ २६ ॥

अथ समवतरिष्यन्माधवोत्कर्षवादी
यतिपतिरिति मत्वा संहतिर्माधवीनाम् ।
व्यसृजदिव मरन्दव्याजमानन्दबाष्पं
कुसुमनयनकोणैर्भृङ्गताराभिरामैः ॥ २७ ॥

काले शुभेऽशोकलतेयमस्मिन्
दूरस्थिता पुष्पवतीति भृङ्गैः ।
वाचालितं वाग्विसरं निशम्य
मन्दं व्यहासीदिव मालती सा ॥ २८ ॥

अभ्यासयन्ति स्म चयाः पिकाना-
मन्योन्यसङ्केतमिवाश्रयन्तः ।
आविर्बुभूषोर्द्रुतमर्भकस्य
कलध्वनेः कण्ठजिगीषयेव ॥ २९ ॥

माधवो माधवोत्कर्षनिष्कर्षको
मेदुरः सद्गुणैः प्रादुरासीदिति ।
पादपे पादपे तुष्टतां वष्टि तां
सत्यमित्युज्जगौ भृङ्गता सङ्गता ॥ ३० ॥

चचाल मलयाचलोच्चलितचञ्चरीकोऽनिलोऽ
थ चोलवनिताचलच्चिकुरगंधनीरंध्रितः ।
विधाय पथिकाङ्गनाविरहतापसंदीपनां
प्रियावियुतमानिनीजनमनोविनोदंकरः ॥ ३१ ॥

भूरुहे भूरुहेऽव्याकुलः कोकिलः
कोकिले कोकिले मञ्जुलः पञ्चमः ।
पञ्चमे पञ्चमे पान्थसंतर्जनं
तर्जने तर्जने साध्वसः साध्वभूत् ॥ ३२ ॥

रथन्तरारम्भनिरन्तरोऽसौ
वसन्तमासः सवने समन्तात् ।
अनन्तसूरेरवतारभाजः
स्तुतिं व्यधत्तेव सुखं श्रुतीनाम् ॥ ३३ ॥

प्राचीनवाचां निचयैः सवोत्थैः
फणिप्रधानाभ्युदयार्हकाले ।
अश्रान्तकौतूहलभारतान्तैः
अन्योन्यसंवाद इवान्वभावि ॥ ३४ ॥

सदर्थहेतोः किल सन्निधाने
को वा न सन्तुष्यति भूतलेऽस्मिन् ।
यागीयवेदैरत एव तुष्टं
कोलाहलाढ्यैः उदये यतीन्दोः ॥ ३५ ॥

(अयं ग्रन्थः एतावानेव उपलभ्यते)

अष्टादशोत्तरशते सहस्रे तु चतुष्टये ।
गते कलौ पिङ्गलाब्दे शालिवाहशकाब्दके ॥

नवत्रिंशे नवशते गते वासन्तिकेत्वृतौ ।
चैत्रमासे शुक्लपक्षे पञ्चम्यां गुरुवासरे ॥

मध्याह्ने कर्कटे लग्ने नक्षत्रे रुद्रदैवते ।
तस्यां केशवभार्यायां जज्ञे रामानुजः सुतः ।
बादरायणसूत्राणां तत्त्वार्थप्रतिपत्तये ।
अवतीर्णमवन्यां श्रीभाष्यकारं यतिं भजे ॥

शुभमस्तु

# विरक्तिगुरुवरसप्तति:

## ( भावार्थः )

१. स भगवान् वरदराजः हस्तिगिरेः शिखरे निवसति,
यस्य प्रसादेन विद्वांसः मोक्षसाम्राज्यं लभन्ते ॥

२. अज्ञोऽप्यहं भक्तिपरवशो गुरुं स्तोतुं प्रवर्ते ।
विरक्तिगुरुरेव स्तोत्रमेतत् निर्दोषं गुणवच्च करिष्यति ॥

३. कुकवेरपि मे वाणी गुरोः प्रभावात् शुकभाषितवन्माधुर्यं लब्ध्वा
श्रोतॄनानन्दयिष्यति ॥

४. कलुषितचित्तानां अस्माकं विरक्तिगुरुवरचरणादन्यः
मोक्षोपायः को वा विद्यते ? ॥

५. विरक्तिगुरुभक्तेरन्या मोक्षदायिनी गतिर्नास्ति ॥

६. श्रीरङ्गनगरे कल्पवल्लीसदृश्या श्रीमहालक्ष्म्या समेतस्य भगवतो रङ्गनाथस्य
कारुण्ये पारदर्शिने गुरवे पौनःपुन्येन नमः ॥

७. संसारभयापहारक हे गुरुवर ! जय विजयीभव ।
अविनीतानस्मान् तव पदयुगं नय ॥

८. हे गुरुवर ! तव चरणादन्यत् किञ्चिदपि नाहमाश्रयामि ।
त्वामाश्रिता बहवः कृतार्था बभूवुः ॥

९. सत्यवादिभिः भक्तैरुद्घोष्यमाणा हितकारिणी
विरक्तिगुरोः अन्वर्थाऽभिख्या सर्वत्र प्रकाशताम् ॥

१० तव भक्ताः काम्यानि कर्माणि परित्यज्य
सन्मार्गमवलम्बन्ते, यस्माद्यमबाधायाः विमुक्ताः मोक्षं लभन्ते ॥

११. गरुडवाहनस्य भगवतः पदकमलध्यानसक्तः
निर्दोषः गुरुः मम मनसि भासताम् ॥

१२. हे सखायः ! तापत्रयतप्तानां युष्माकं मनः विरक्तिगुरुमाश्रयतु, यः
क्षीरसागरशायिनो भगवतो ध्यानेन रोमाञ्चितो जयति ॥

१३. हेयेषु कामभोगेषु चपलस्य मम उद्धाराय दयानिधेः गुरोः कटाक्षः सिध्यतु ॥

१४. हे जिह्वे। जय जयकारैस्तं गुरुं प्रीणय।
एतेन स्तोत्रेण प्रीतः स संसारबन्धं विमोचयतु ॥

१५. कलिकालस्य महिम्ना क्षीणशक्तिर्गुरोः स्तोत्रेऽहमसमर्थः। किमुत जगदादिकारणस्य भगवतः स्तोत्रे ? ॥

१६. कदलीनां माधुर्यगर्वापहारिणी गुरोर्वाक्चातुरी विजयताम्, यया कुत्सितमतानुसारिणां वाचालता पराजिता निर्मूलिता भवति(प्रणश्यति)॥

१७. पापनिवारकं गुरुं भूयोभूयः नमामि, यस्य पादपद्मं पापिनां समूहं नरकात् रक्षति ॥

१८. रसने, परमानन्ददायके गुरौ विषये नृत्यं भजस्व। सत्त्वरजस्तमोभिः त्रिभिः गुणैः बद्धे मयि वन्दिमागधसदृशी त्वं गुरोः प्रसादं संपादय ॥

१९. विरक्तिगुरोः स्तोत्रे प्रवृत्ता मम वाणी शुद्धा भवतु। क्षुद्रान् नृपतीन् च तृणाय मन्यताम् ॥

२०. पुण्डरीकाक्षेण भगवताऽत्मनः करुणैव शरणागतपरिरक्षणाय विरक्तिरघुवरगुरोः रूपेण भूम्यामवतारिता।

२१. मरणपर्यन्तं गुरोश्चरणस्मरणं संपद्यताम्।
मरणादूर्ध्वं तु भगवन्तं ध्यायेयम् ॥

२२. सतां समूहमहङ्कारग्रस्तोऽहं न प्रणमामि। प्रत्युत सज्जनेभ्यः द्रुह्यामि। हे गुरो, तथापि मयि त्वं दयसे इति चित्रम् ॥

२३. मया वेदः नाधीतः। शेषशेषिणोः जीवपरमात्मनोः भेदोऽपि न ज्ञातः। किन्तु, हे गुरो! तव पादयोः प्राप्तिरेव मम दर्पहेतुः ॥

२४. कोकिलवाग्भिः कविभिःस्तोतुं योग्यं सुमधुरकण्ठस्वरं गुरुकण्ठीरवं स्तौमि।

२५. हे गुरो! आचार्यलाभः भगवतः कटाक्षाद्भवतीति वदन्ति। परन्तु त्वत्कटाक्षादेव भगवतः प्राप्तिरिति चारुतरम् ॥

२६. संसारसागरं तितीर्षो हृदय! गुरुचरणरूपां नावमारोह यावत्, श्रीवैकुण्ठाख्ये देशविशेषे शेषशायिनं भगवन्तमासाद्य उज्जीविष्यसि ॥

२७. अनश्वरमकरन्दभरिते श्रीरङ्गनाथपदकमले भृङ्गायमाणमानसो विरक्तिगुरुर्जयतु ॥

२८. भगवन्नामानि उच्चारयतो गुरोः समुद्रजलधारासदृशी वाणी जयतु ॥

२९. वेदान्तदेशिकसदृशेन वैराग्यादिगुणगणनिलयेन गुरुणाऽहं नाथवानस्मि ॥

३०. प्रणमतो भक्तान् मन्दस्मितज्योत्स्नया आनन्दयन्तं गुरुचन्द्रं स्तौमि ॥

३१. एष गुरुचन्द्रस्तु दोषाणामासङ्गं दोषायाः रात्रेश्च सम्बन्धं परित्यज्य प्रभया सूर्यमपि जित्वा कलाभिर्ज्योत्स्नाभिर्विद्याभिश्च पूर्णः पापरूपं तमः दूरीकरोति । सतां साधूनां नक्षत्राणां च सत्कारं करोति ॥

३२. हेविरक्तिगुरो ! लोके कलङ्की भवन्नपि ज्योतिरुदस्तः सतां सदस्यः भाति इति हेतोः कलङ्किनो ममापि तथा भावःस्यात् इति विमृश्य मयि ते दयाप्रसरः कथं युज्यते । सहि ज्योतिरुदस्तः सतां सदस्यश्च संपन्नः कलङ्की कलाः एति । अतस्तस्य विधोः श्चन्द्रस्य कलङ्कित्वेपि तादृक्त्वं कलानिधित्वादुपपन्नम् । अहं पुनः केवलं कलङ्की, न तु कलावान् । अतो मम तथात्वं कथं भवेदिति ॥ [कला इति द्वितीया बहुवचनं, एतीत्यस्य कर्म ]

३३. चन्द्र शब्दः शक्तया मुख्यया वृत्त्या गुरुमेव बोधयति, न इन्दुम् । यतः स रात्रावयुक्तान् विरहिणः योगाभ्यासरहितांश्च, गवां किरणानां वाचां च गुम्भेन आह्लादयति ।

३४. कलाः प्राप्य उत्पथगः उन्नतमार्गगामी उच्छृंखलश्च चन्द्रः सन्मार्गमाकाशं चातिक्रामति । वर्ण्यमानस्य गुरोश्चरितं तु न तथा, किन्तु हृदयङ्गममस्ति ॥

३५. हे गुरो ! दोषनिधीनप्यस्मान् पालयतस्तव दोषज्ञः पण्डित इति कीर्तिः कथं जातेति व्याजस्तुतिः । दोषानुपेक्ष्य रक्षसीत्यर्थः ॥

३६. सकलं जगत्तृणप्रायं मन्यमानस्य मे गर्वं निराकृत्य मां वशीकर्तुं गुरोः कृपैव अलम् ॥

३७. वेदान्तदेशिकस्य मतं कुमतीनामुपप्लवात् गुरुर्न रक्षति चेत् तत् जगति शीघ्रमेव क्षीयेत ॥

३८. त्वयि प्रेमभाजां संसारे स्थिरो विद्वेषो जायते। ते मुच्यन्ते इति भावः। त्वयि द्वेषभाजां साधुवेषोऽपि केवलं भारायते। ते नरके पतन्तीति भावः ॥

३९. सकलकलानिधिर्गुरुर्मयि कटाक्षं किरति चेत् लक्ष्मीपतेः कटाक्षस्तेनैव सुलभो भविष्यति ॥

४०. हे वत्सकुलप्रसूत गुरो! मह्यं वात्सल्यातिशयेन श्रीरङ्गनाथपदकमलसङ्गं दातुमिच्छसि। मोक्षं दातुमिच्छसीति भावः ॥

४१. पापानि वारयितुं, महान्तमानन्दं लब्धुं, तव चरणमेव सदा स्मर्तुं, त्वां स्तोतुं च, हेगुरो! तव दयैव मे शक्ति ददाति ॥

४२. श्रीमद्रामानुजसिद्धान्तसारं विरक्तिगुरोः सूक्तीनां गुम्भं स्तौमि। अन्यैः युक्तिरहितैः निर्वचनहीनैः दुरुक्तिजालैः किं फलम् ॥

४३. प्रतिवादिनां दुःखकारिणं स्वमतीयानां च सन्तोषकरं दशापि दिशः शब्देन पूरयन्तं गुरोर्वादाहवं श्रोतुमीहे ॥

४४. संशयात्मभ्यः मन्दमतिभ्यः अमन्दं ज्ञानं प्रदातुं भुवमवतीर्णं भगवतः दूतं गुरुं वन्दे ॥

४५. मादृशानां पापरूपान् राक्षसगणान् नाशितवतः गुरोः अन्वर्थः " रघुवर " इति आख्या पण्डितैरदायि ॥

४६. मम हृदये क्वचित् पापरूपे रक्षोगणे स्थिते तस्य निर्मूलनायैव रघुवराभिधानो विरक्तिगुरुर्भूमाववततार ॥

४७. हे गुरो! भवतः श्रीरङ्गनाथे भक्तिरिति किमाश्चर्यम्? यतो रङ्गनाथः रघूणां कुलधनम्, त्वं च रघुवरनामा तेषां कुलप्रदीपः ॥

४८. बोधायनस्य वृत्तिः गुरोः सूक्तिभिः समर्थिता सती अद्यैव निराबाध प्रचारं लभते ॥

४९. मम जिह्वा विरक्तिराघवगुरुं प्रस्तौतु। अन्ते स गुरुः भगवदालिङ्गनाय मामाह्वापयेत् ॥

५०. दुरितेषु निर्दयः, कलिदूषितेषु आश्रितेषु दयालुः, देवर्षिपितृणामनृणः, श्रीलक्ष्मीनारायणयोर्भक्तः,

५१. परनिन्दायां बधिरः, परिहासगोष्ठीनां बाह्यः, दुर्वादिभिः दुर्वारः, अङ्गरेखासु सुन्दरः,

५२. बुद्धौ चतुरः, वाचि मधुरः, गम्भीरमनाः, अधर्मभीरुः, एवं अनेक-कल्याणगुणभूषितो गुरुर्जयति ॥

५३. हे गुरो संसारे सञ्चरन्तं कं वा पुरुषं त्वं अष्टाक्षरं मन्त्रमुपदिश्य विदुषा-मग्रगण्यं विष्णुभक्तं च न करोषि ?

५४. मम मनसि विद्यमानं अज्ञानं नाम अन्धकारं सूर्योऽपि न वारयितुं शक्तः, किमुत चन्द्रादयः। विरक्तिगुरुरेव तं निवारयेत् ॥

५५. क्षुधाधिबाधां यातान् निवृत्तिमार्गं परित्यक्तवतः अस्मान् मातृरूपः त्वमेव तत्त्वार्थरूपैः स्तन्यैः त्राता स्याः ॥

५६. शीघ्रमेव मम अनादिनिद्रारूपमायासंबन्धं निवारय, यतः रन्ध्रान्वेषी अरिषड्वर्गः आक्रमणकामस्तिष्ठति ॥

५७. विष्णो र्नामादरेण मङ्गळा "कृष्ण" इति गुरोर्वाक् भक्तानां पापानि परिहरन्ती शुभं ददातु ॥

५८. एषः गुरुः अक्षयं रसं अभिवर्षन् कोऽपि विलक्षणः मेघ इति मन्ये ॥

५९. भक्तानां जयकारैः अभिनन्द्यमानौ गुरोः चरणौ भृङ्गानां संगीतेन अनु-नादितयोः सरोजयोः कान्तिं लभेते ॥

६०. आचार्ये परं धाम प्रविष्टे सति, हे आचार, त्वं कुत्र चरिष्यति ? अस्मिन् कलौ वाचापि त्वां अन्यः को वा आद्रियेत ? ॥

६१. हे गुरो ! भाषणकुशलः फणिपतिः आदिशेषोऽपि तव गुणौघं वर्णयितु-मसमर्थः लज्जया पातालं विवेश इति मन्ये ॥

६२. हे गुरो, निर्गतिकं मां रक्षसि चेत्, तेन विशालां कीर्तिं प्राप्स्यसि, अन्यथा तु सर्वसहस्य मे न काचित् हानिः ॥

६३. विशाले विषयसमुद्रे निस्तारस्य कारणभूतात् तत्त्वमुद्रासहितात् गुरोः करकमलादन्यः अस्माकं तारकः कः ?

६४. दुर्बुद्धिरपि पुमान् वत्सकुलाम्बुधिचन्द्रं विरक्तिगुरुं भजेत चेत्, न केवलं स्वयं मोक्षं लभते, किन्तु अन्येषामपि तं दातुमिच्छति ॥

६५. चरणौ संवाहय इति गुरोः मया सह संलापः कदा भविष्यति । कदा च मम शिरसा गुरोः चरणौ धारयिष्यामि ॥

६६. हे गुरो! दान्तेन भवता भूमौ भगवति रमारमणे प्रकाशिते सति चिराय क्रियया आयस्तः यमः पापिनामभावात् अधुनैव विश्रान्तः ॥

६७. गुरुः मम पापानि परिहरन् सत्यया भक्त्या जनितां मद्वाणीं मुरळीशब्दवत् सरळीकरोतु ॥

६८. सर्वसङ्गपरित्यागिनं भगवति प्रपन्नं विरक्तिगुरुं समाश्रिता कृतार्थस्य मे वाणी अन्यदाह्लादकरं वस्तु नापेक्षते ॥

६९. विष्णुपरायणां अविद्यासंवन्ध नाशिनीं मनोरमां विरक्तिगुरुवरविद्यां सदा मनसा चिन्तयामि ॥

७०. श्रीरङ्गक्षेत्रं, तत्र वसन् श्रीरङ्गनाथः, तस्य भक्तो विरक्तिगुरुः, तद्वाचकं विरक्तिपदं च सर्वोत्कर्षेण वर्तन्ताम् ॥

७१. मात्सर्यात् दोषैकदर्शी दुर्जनः इमां स्तुतिं निन्दतु नाम । अनेके पण्डिताः इमां भूषयिष्यन्ति ॥

७२. वङ्गीश्वरकुलोत्पन्नेन विरक्तिराघवचरणाश्रयेण श्रीनिवासाभिधानेन विदुषा मनुष्याणां पापनिवारिणी स्तुतिरेषा विरचिता.

## श्रीयतिपतिवैभवदीपिकोपोद्घात श्लोकार्थनिर्देशः

श्लो. १. क्षीराम्बुधिशायी श्रीमन्नारायणः ॥ २. श्रीरङ्गनाथः ॥ ३. श्रीरङ्गनायकी ॥ ४. श्रीवेङ्कटेशः ॥ ५. 'तिरुच्चानूर्' पद्मावती ॥ ६. श्रीकाञ्चीदेवाधिराजः ॥ ७. देवाधिराजमहिषी (पेरुन्देवी) ॥ ८. तिरुनारायणपुर श्रीमन्नारायणः ॥ ९. नारायणदिव्यमहिषी ॥ १०. श्रीचक्रराजः ॥ ११. श्रीपाञ्चजन्यम् ॥ १२. श्रीशठकोपः ॥ १३. श्रीनाथमुनिः ॥ १४. श्रीयामुनमुनिः ॥ १५-१७. श्रीभगवद्रामानुजः ॥ १८. श्रीनिगमान्तदेशिकः ॥ १९-२०. श्रीविरक्तिराघवार्यगुरुः ॥ २१. श्रीकपिस्थलं देशिकाचार्यः ॥ २२. श्रीकपिस्थलं रङ्गाचार्यः ॥ २३. श्रीभरद्वाजमहर्षिः ॥ २४-३०. प्रबन्धकर्तुः प्रतिज्ञानैच्यानुसंधानादि ॥ ३१. ग्रन्थप्रतिपाद्यारम्भः ॥

श्रीः

श्रीलक्ष्मीपुरं श्रीनिवासाचार्यप्रणीत-

## “श्रीमत्तिरुमलैनल्लान् चक्रवर्तिवैभव”

## ग्रन्थान्तर्गतं श्रीविरक्तिराघवाचार्यस्वामिदिव्यचरितम्

श्रीमत्तिरुमलार्यस्य भाष्यकाराह्वयो महान् ।
प्रथमस्तनयः प्रोक्तः महौजाश्च महातपाः ॥ १ ॥
मध्यमो वेङ्कटाचार्यः योह्यप्येत्याख्यया श्रुतः ।
तृतीयो रामचन्द्रार्यः महाभाग्योदयो महान् ॥ २ ॥
तस्यात्मजो विरक्तः श्रीराघवार्यमहागुरुः ।
शकभूपस्य समये रसाब्ध्यश्वेन्दुभिर्मिते ॥ ३ ॥
चित्रभानुशुचिस्वात्यां महात्मा समवातरत् ।
सात्त्विकप्रकृतिस्सोऽयमाजन्मं रागवर्जितः ॥ ४ ॥
सर्वसच्छास्त्रसारज्ञः सर्वभूतप्रियंवदः ।
भूयोऽपि निगमान्तार्यः संप्रदायप्रवर्तनम् ॥ ५ ॥
कर्तुं ह्यवातरदिति सर्वैरुत्प्रेक्ष्यतप्रभुः ।
शुद्धवृत्तिश्शुभाचारः शुभ्रवेषः शुभावहः ॥ ६ ॥
सर्वभूतसुहृद्विद्वान् ब्रह्मविद्याप्रवर्तकः ।
वाचामगोचरगुणो महाभागवतोत्तमः ॥ ७ ॥
श्रीमत्सदार्यवरददेशिकेन्द्रकृपाभरात् ।
संप्राप्तसत्संप्रदायो विरक्तकुलशेखरः ॥ ८ ॥
शरणागतिसच्छास्त्रपारदृश्वा रघूद्वहः ।
श्रीरंगनाथपादाब्जे स्वनिष्ठामन्वतिष्ठत ॥ ९ ॥

दिव्यदेशसदावासी कस्मिंश्चित्कारणान्तरे ।
विरक्तसार्वभौमत्वं काञ्चीपौरेष्वदर्शयत् ॥ १० ॥
तदा प्रभृति सर्वेषु देशेष्वेष गुरूत्तमः ।
विरक्तिराघवाचार्य इत्येव प्रथितोऽभवत् ॥ ११ ॥
तपोधनो गुरुरसावात्मनो जन्मभूषिते ।
लक्ष्मीपुरे देवराजसन्निधौ श्रेयसां निधौ ॥ १२ ॥
धनुर्मासाराधनाय दिव्यनैवेद्यलक्षणम् ।
स्थिरं कैंकर्यमुद्दिश्य व्यवस्थां समकल्पयत् ॥ १३ ॥
संप्रदायं परिष्कृत्य शिक्षयित्वा च मादृशान् ।
अन्तकाले रंगधाम्नि कालशेषं समापयत् ॥ १४ ॥
चतुर्विंशत्या च युतैः अष्टादशशतैर्मिते ।
प्लवे कर्कटके शुक्ले चतुर्थ्यां रंगधामनि ॥ १५ ॥
विरक्तिराघवाचार्यस्वामी लोकगुरुर्महान् ।
रङ्गनाथपदाम्भोजं प्रययौ चिरकांक्षितम् ॥ १६ ॥
तस्येदं मन्त्रपद्यं हि देशिकेन्द्रशिखामणेः ।
अनुसंधीयते नित्यं महाभाग्यवशंवदम् ॥ १७ ॥
श्रीवत्सवंशकलशाम्बुधिपूर्णचन्द्रं
श्रीमत्सदार्यगुरुराट्करुणैकपात्रम् ।
श्रीरङ्गनाथचरणार्पितचित्तवृत्तिं
श्रीमद्रघूद्वहगुरुं शरणं प्रपद्ये ॥ १८ ॥

**श्रीमते रघूद्वहमहादेशिकाय नमः**

***Copies can be had from:***

1. Sri S. VARADACHARI,
42, Chitrakulam North Street,
Mylapore, Madras.

2. Sri S. ANANTHACHARI,
Personal Assistant,
Ministry of Finance,
North Block, New Delhi.

3. Messrs, B. G. PAUL & CO.,
4, Francis Joseph St.,
Madras-1.

**Bharati Vijayam Press, Triplicane, Madras-5.**